# MAHABHARATAM

## VIRATA PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAP CHANDRA ROY, C. I. E.

# श्रीमहाभारतम् ।

श्रीमन्महर्षिवेदव्यासविरचितम् ।

विराटपर्व्व ।

सि, आइ, इ, उपाधिधारिणा

रायः श्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च ।

" [illegible] "

---

तृतीयसंस्करणम् ।

कलिकाता बीडन् ष्ट्रीटान्तर्गत

१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे

श्रीकालिदास सेनेन मुद्रितम् ।

शकाब्दाः १ ,० ।

# श्रीमहाभारतम्।

## विराटपर्व ।

### पाण्डवप्रवेशपर्व ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

जनमेजय उवाच । कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्य्योधनभयार्द्दिताः ॥ १ ॥ पतिव्रता महा-
भागा सततं ब्रह्मवादिनी । द्रौपदी च कथं ब्रह्मन्नज्ञाता दुःखिता-
ऽवसत् ॥ २ ॥

वैशम्पायन उवाच । यथा विराटनगरे तव पूर्वपितामहाः ।
अज्ञातवासमुषितास्तच्छृणुष्व नराधिप ॥ ३ ॥ तथा तु स वरां-
ल्लब्ध्वा धर्माद्धर्मभृतां वरः । गत्वाश्रमं ब्राह्मणेभ्य आचख्यौ सर्वमेव
तत् ॥ ४ ॥ कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यो युधिष्ठिरः । अरणी-
सहितं तस्मै ब्राह्मणाय न्यवेदयत् ॥ ५ ॥ ततो युधिष्ठिरो राजा
धर्मपुत्रो महामनाः । सन्निवर्त्त्यानुजान् सर्वानिति होवाच भारत
॥ ६ ॥ द्वादशेमानि वर्षाणि राज्यविप्रोषिता वयम् । त्रयोदशो-
ऽयं सम्प्राप्तः कृच्छ्रात् परमदुर्वसः ॥ ७ ॥ स साधु कौन्तेय इतो
वासमर्जुन रोचय । संवत्सरमिमं यत्र वसेमाविदिताः परैः ॥ ८ ॥

अर्जुन उवाच । तस्यैव वरदानेन धर्मस्य मनुजाधिप ।

अज्ञाता विचरिष्यामो नराणां नात्र संशयः ॥ ९ ॥ किन्तु वासाय राष्ट्राणि कीर्त्तयिष्यामि कानिचित् । रमणीयानि गुप्तानि तेषां किञ्चित् स्म रोचय ॥ १० ॥ सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून् । पाञ्चालाश्चेदिमत्स्याश्च शूरसेनाः पटच्चराः ॥११॥ दशार्णा नवराष्ट्राश्च मल्लाः शाल्वा युगन्धराः । कुन्तिराष्ट्रञ्च विपुलं सुराष्ट्रावन्तयस्तथा ॥ १२ ॥ एतेषां कतमो राजन्निवासस्तव रोचते । यत्र वत्स्यामहे राजन् सम्वत्सरमिमं वयम् ॥ १३ ॥

युधिष्ठिर उवाच । श्रुतमेतन्महाबाहो यथा स भगवान् प्रभुः । अब्रवीत् सर्वभूतेशस्तत्तथा न तदन्यथा ॥१४॥ अवश्यन्त्वेव वासार्थं रमणीयं शिवं सुखम् । सम्मन्त्र्य सहितैः सर्वैर्वस्तव्यमकुतोभयैः ॥ १५ ॥ मत्स्यो विराटो बलवानभिरक्षोऽयं पाण्डवान् । धर्मशीलो वदान्यश्च वृद्धश्च सतत प्रियः ॥ १६ ॥ विराटनगरे तात सम्वत्सरमिमं वयम् । कुर्वन्तस्तस्य कर्माणि विहरिष्याम भारत ॥ १७ ॥ यानि यानि च कर्माणि तस्य वक्ष्यामहे वयम् । आसाद्य मत्स्यं तत् कर्म प्रब्रूत कुरुनन्दनाः ॥ १८ ॥

अर्जुन उवाच । नरदेव कथं तस्य राष्ट्रे कर्म करिष्यसि । विराटनगरे साधो वत्स्यसे केन कर्मणा ॥ १९ ॥ मृदुर्वदान्यो ह्रीमांश्च धार्मिकः सत्यसङ्गरः । राजंस्त्वमापदाकृष्टः किङ्करिष्यसि पाण्डव ॥ २० ॥ न दुःखमुचितं किञ्चिद्राजा वेद यथा जनः । स इमामापदं प्राप्य कथं घोरान्तरिष्यसि ॥ २१ ॥

युधिष्ठिर उवाच । शृणुध्वं यत् करिष्यामि कर्म वै कुरुनन्दनाः । विराटमनुसम्प्राप्य राजानं पुरुषर्षभाः ॥ २२ ॥ सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः । कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेवनः ॥ २३ ॥ वैदूर्य्यान् काञ्चनान् दान्तान् फलैर्ज्योतीरसैः सह । कृष्णाक्षाल्लोहिताक्षांश्च निर्वर्त्स्यामि मनोरमान् ॥ २४ ॥ विराटराजं रमयन् सामात्यं सबान्धवम् । स

च मां वैत्स्यति कश्चित्तोषयिष्ये च तं नृपम् ॥ २५ ॥ आसं युधि-
ष्ठिरस्याहं पुरा प्राणसमः सखा । इति वक्ष्यामि राजानं यदि
मां सोऽनुयोक्ष्यते ॥ २६ ॥ इत्येतद्वो मया ख्यातं विहरिष्याम्यहं
यथा । वृकोदर विराटे त्वं वत्स्यसि केन हेतुना ॥ २७ ॥

इति विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरादिमन्त्रणे
प्रथमोऽध्यायः ॥ १ ॥

---

भीमसेन उवाच । पौरोगवो ब्रुवाणोऽहं बल्लवो नाम भारत ।
उपस्थास्यामि राजानं विराटमिति मे मतिः ॥ १ ॥ सूपानस्य
करिष्यामि कुशलोऽस्मि महानसे । कृतपूर्व्वाणि यैरस्य व्यञ्जनानि
सुशिक्षितैः ॥ २ ॥ तानप्यभिभविष्यामि प्रीतिं सञ्जनयन्नहम् ।
आहरिष्यामि दारूणां निचयान्महतोऽपि च ॥ ३ ॥ यत् प्रेक्ष्य
विपुलं कर्म राजा संयोक्ष्यते स माम् । अमानुषाणि कुर्व्वाणस्तानि
कर्माणि भारत ॥ ४ ॥ राज्ञस्तस्य परिप्रेष्या मंस्यन्ते मां यथा
नृपम् । भक्ष्यान्नरसपानानां भविष्यामि तथेश्वरः ॥ ५ ॥ द्विपा
वा बलिनो राजन् वृषभा वा महाबलाः । विनिग्राह्या यदि मया
निग्रहीष्यामि तानपि ॥ ६ ॥ ये च केचिन्नियोत्स्यन्ति समाजेषु
नियोधकाः । तानहं निहनिष्यामि रतिं तस्य विवर्द्धयन् ॥ ७ ॥
न त्वेतान् युध्यमानान् वै हनिष्यामि कथञ्चन । अथ तान् पातयि-
ष्यामि यथा यास्यन्ति न क्षयम् ॥ ८ ॥ आरालिको गोविकर्त्ता
सूपकर्त्ता नियोधकः । आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः
॥ ९ ॥ आत्मानमात्मना रक्षंश्चरिष्यामि विशाम्पते । इत्येतत्
प्रतिजानामि विहरिष्याम्यहं यथा ॥ १० ॥

युधिष्ठिर उवाच । यमग्निर्ब्राह्मणो भूत्वा समागच्छन्नृणां
वरम् । दिधक्षुः खाण्डवं प्रच्छन्नं दाशार्हसहितं पुरा ॥ ११ ॥

महाबलं महाबाहुमजितं कुरुनन्दनम् । सोऽयं किन्तु कौन्तेय
करिष्यति धनञ्जयः ॥ १२ ॥ योऽयमासाद्य तं दावं तर्पयामास
पावकम् । विजित्यैकरथेनैव हत्वा पन्नगराक्षसान् ॥१३॥ वासुकेः
सर्पराजस्य स्वसारं हृतवांश्च यः । श्रेष्ठो यः प्रतियोधानां सोऽ-
र्ज्जुनः किङ्करिष्यति ॥ १४ ॥ सूर्य्यः प्रतपतां श्रेष्ठो द्विपदां ब्राह्मणो
वरः । आशीविषश्च सर्पाणामग्निस्तेजस्विनां वरः ॥ १५ ॥ आयु-
धानां वरं वज्रं ककुद्मी च गवां वरः । ह्रदानामुदधिः श्रेष्ठः
पर्ज्जन्यो वर्षतां वरः ॥ १६ ॥ धृतराष्ट्रश्च नागानां हस्तिष्वैरा-
वणो वरः । पुत्रः प्रियाणामधिको भार्य्या च सुहृदां वरा ॥१७॥
यथैतानि विशिष्टानि जात्यां जात्यां वृकोदर । एवं युवा गुडा-
केशः श्रेष्ठः सर्वधनुष्मताम् ॥ १८ ॥ सोऽयमिन्द्रादनवरो वासु-
देवान्महाद्युतिः । गाण्डीवधन्वा बीभत्सुः श्वेताश्वः किङ्करिष्यति
॥ १९ ॥ उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि । अस्त्रयोगं
समासाद्य स्ववीर्य्यान्मानुषाद्भुतम् ॥२०॥ दिव्यान्यस्त्राणि चाप्तानि
देवरूपेण भास्वता । यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम् ।
वसूनां नवमं मन्ये ग्रहाणां दशमं तथा ॥ २१ ॥ यस्य बाहू समौ
दीर्घौ ज्याघातकठिनत्वचौ । दक्षिणे चैव सव्ये च गवामिव वहः
कृतः ॥ २२ ॥ हिमवानिव शैलानां समुद्रः सरितामिव । त्रिद-
शानां यथा शक्रो वसूनामिव हव्यवाट् ॥ २३ ॥ मृगाणामिव
शार्दूलो गरुडः पततामिव । वरः सन्नह्यमानानां सोऽर्ज्जुनः
किङ्करिष्यति ॥ २४ ॥

अर्ज्जुन उवाच । प्रतिज्ञां षण्ढकोऽस्मीति करिष्यामि महीप-
पते । ज्याघातौ हि महान्तौ मे संवर्त्तुं नृप दुष्करौ ॥ २५ ॥
वलयैश्छादयिष्यामि बाहू कृतकिणाविमौ । कर्णयोः प्रतिमुच्याहं
कुण्डले ज्वलनप्रभे ॥ २६ ॥ पिनद्धकम्बुः पाणिभ्यां तृतीयां प्रकृतिं
गतः । वेणीकृतशिरा राजन् [illegible] नाम्ना ॥ २७ ॥ पठ-

न्नाख्यायिकाश्चैव स्त्रीभावेन पुनः पुनः । रमयिष्ये महीपालमन्यां
श्चान्तःपुरे जनान् ॥ २८ ॥ गीतं नृत्यं विचित्रञ्च वादित्रं विविधं
तथा । शिक्षयिष्याम्यहं राजन् विराटस्य पुरस्त्रियः ॥ २९ ॥
प्रजानां समुदाचारं बहुकर्म कृतं वदन् । छादयिष्यामि कौन्तेय
माययात्मानमात्मना ॥ ३० ॥ युधिष्ठिरस्य गेहे वै द्रौपद्याः परि-
चारिका । उषितास्मीति वक्ष्यामि पृष्टो राज्ञा च पाण्डव ॥३१॥
एतेन विधिना छन्नः कृतकेन यथानलः । विहरिष्यामि राजेन्द्र
विराटभवने सुखम् ॥ ३२ ॥

वैशम्पायन उवाच । इत्येवमुक्त्वा पुरुषप्रवीरस्तथार्ज्जुनो धर्म-
भृतां वरिष्ठः । वाक्यं तथासौ विरराम भूयो नृपोऽपरं भ्रातर-
मावभाषे ॥ ३३ ॥

इति विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरादिमन्त्रणे
द्वितीयोऽध्यायः ॥ २ ॥

---

युधिष्ठिर उवाच । किं त्वं नकुल कुर्व्वाणस्तत्र तात चरि-
ष्यसि । कर्म तत् त्वं समाचक्ष्व राज्ये तस्य महीपतेः । सुकुमारश्च
शूरश्च दर्शनीयः सुखोचितः ॥ १ ॥

नकुल उवाच । अश्वबन्धो भविष्यामि विराटनृपतेरहम् ।
सर्व्वथा ज्ञानसम्पन्नः कुशलः परिरक्षणे ॥ २ ॥ ग्रन्थिको नाम
नाम्नाहं कर्म्मैतत् सुप्रियं मम । कुशलोऽस्म्यश्वशिक्षायां तथैवाश्व-
चिकित्सने ॥ ३ ॥ प्रियाश्च सततं मेऽश्वाः कुरुराज यथा तव । ये
मामामन्त्रयिष्यन्ति विराटनगरे जनाः ॥ ४ ॥ तेभ्य एवं प्रवक्ष्यामि
विहरिष्याम्यहं यथा । पाण्डवेन प्र हं तात अश्वेष्वधिकृतः पुरा ।
विराटनगरे छन्नश्चरिष्यामि महीपते ॥ ५ ॥

युधिष्ठिर उवाच । सहदेव कथं तस्य समीपे विहरिष्यसि ।
किं वा त्वं कर्म कुर्व्वाणः प्रच्छन्नो विहरिष्यसि ॥ ६ ॥

सहदेव उवाच। गोसङ्ख्याता भविष्यामि विराटस्य मही-
पतेः। प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम्॥ ७ ॥
तन्तिपाल इति ख्यातो नाम्नाहं विदितस्त्वथ। निपुणञ्च चरि
ष्यामि व्येतु ते मानसो ज्वरः॥ ८ ॥ अहं हि सततं गोषु भवता
प्रहितः पुरा। तत्र मे कौशलं सर्वमवबुद्धं विशाम्पते॥ ९ ॥
लक्षणञ्चरितं चापि गवां यच्चापि मङ्गलम्। तत्सर्वं मे सुविदित-
मन्यच्चापि महीपते॥ १० ॥ वृषभानपि जानामि राजन् पूजित
लक्षणान्। येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते॥ ११ ॥
सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा। न च मां वेत्स्यते
कश्चित्तोषयिष्ये च पार्थिवम्॥ १२ ॥

युधिष्ठिर उवाच। इयं हि नः प्रिया भार्या प्राणेभ्योऽपि
गरीयसी। मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा॥ १३ ॥
केन स्म द्रौपदी कृष्णा कर्मणा विचरिष्यति। न हि किञ्चिद्विजा
नाति कर्म कर्त्तुं यथा स्त्रियः॥ १४ ॥ सुकुमारी च बाला च
राजपुत्री यशस्विनी। पतिव्रता महाभागा कथन्नु विचरिष्यति
॥ १५ ॥ माल्यगन्धानलङ्कारान् वस्त्राणि विविधानि च। एतान्ये-
वाभिजानाति यतो जाता हि भामिनी॥ १६ ॥

द्रौपद्युवाच। सैरन्ध्र्यो रक्षिता लोके भुजिष्याः सन्ति
भारत। नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः॥ १७ ॥
साहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि। युधिष्ठिरस्य गेहे
वै द्रौपद्याः परिचारिका॥ १८ ॥ उषितास्मीति वक्ष्यामि पृष्टा
राज्ञा च भारत। आत्मगुप्ता चरिष्यामि यन्मां त्वं परिपृच्छसि
॥ १९ ॥ सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम्। सा
रक्षिष्यति मां प्राप्तां मा भूत्ते दुःखमीदृशम्॥ २० ॥

युधिष्ठिर उवाच। कल्याणं भाषसे कृष्णे कुले जातासि
भामिनि। न पापमभिजानासि साध्वी साध्वीव्रते स्थिता॥ २१ ॥

यथा न दुष्कृतः पापा भवन्ति सुखिनः पुनः । कुर्य्यांस्तथा त्वं कर्म्माणि लक्षयेयुर्न ते यथा ॥ १२ ॥

इति विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरादिमन्त्रणे तृतीयोऽध्यायः ॥ ३ ॥

---

युधिष्ठिर उवाच । कर्म्माण्युक्तानि युष्माभिर्यानि यानि करिष्यथ । मम चापि यथा बुद्धिरुचिता विधिनिश्चयात् ॥ १ ॥ पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु । सूतपौरोगवैः सार्द्धं द्रुपदस्य निवेशने ॥ २ ॥ इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् । यान्तु द्वारवतीं शीघ्रमिति मे वर्त्तते मतिः ॥ ३ ॥ इमाश्च नार्य्यो द्रौपद्याः सर्व्वाश्च परिचारिकाः । पञ्चालानेव गच्छन्तु सूतपौरोगवैः सह ॥ ४ ॥ सर्व्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः । गता ह्यस्मानपाकीर्य्य सर्व्वे द्वैतवनादिति ॥ ५ ॥

वैशम्पायन उवाच । एवं तेऽन्योऽन्यमामन्त्र्य कर्म्माण्युक्त्वा पृथक् पृथक् । धौम्यमामन्त्रयामासुः स च तान्मन्त्रमब्रवीत् ॥ ६ ॥

धौम्य उवाच । विहितं पाण्डवाः सर्व्वं ब्राह्मणेषु सुहृत्सु च । याने प्रहरणे चैव तथैवाग्निषु भारत ॥ ७ ॥ त्वया रक्षा विधातव्या कृष्णायाः फाल्गुनेन च । विदितं वो यथान्यायं लोकवृत्तमिदं नृप ॥ ८ ॥ विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः । एष धर्म्मश्च कामश्च अर्थश्चैव सनातनः ॥ ९ ॥ अतोऽहमपि वक्ष्यामि हेतुमत्र निबोधत । हन्तेमां राजवसतिं राजपुत्रा ब्रवीम्यहम् ॥ १० ॥ यथा राजकुलं प्राप्य सर्व्वान् दोषांस्तरिष्यथ । दुर्व्वसन्त्वं च कौरव्या जानता राजवेश्मनि ॥ ११ ॥ अमानितैर्मानितैर्वा अज्ञातैः परिवत्सरम् । ततश्चतुर्दशे वर्षे चरिष्यथ यथासुखम् ॥ १२ ॥ पाण्डवाश्चिदूर्यं लोके सर्व्वशस्त्रमयो महान् । भर्त्ता गोप्ता च भूतानां राजा

सहदेव उवाच। गोसङ्ख्याता भविष्यामि विराटस्य महीपतेः। प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् ॥ ७ ॥ तन्तिपाल इति ख्यातो नाम्नाह विदितस्त्वथ। निपुणञ्च चरिष्यामि व्येतु ते मानसो ज्वरः ॥ ८ ॥ अहं हि सततं गोषु भवता प्रहितः पुरा। तत्र मे कौशलं सर्व्वं विबुद्धं विशाम्पते ॥ ९ ॥ लक्षणञ्चरितं चापि गवां यच्चापि मङ्गलम्। तत्सर्व्वं मे सुविदितमन्यच्चापि महीपते ॥ १० ॥ वृषभानपि जानामि राजन् पूजितलक्षणान्। येषां मूत्रमुपाघ्राय अपि बन्ध्या प्रसूयते ॥ ११ ॥ सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा। न च मां वेत्स्यति कश्चित्तोषयिष्ये च पार्थिवम् ॥ १२ ॥

युधिष्ठिर उवाच। इयं हि नः प्रिया भार्य्या प्राणेभ्योऽपि गरीयसी। मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ॥ १३ ॥ केन स्म द्रौपदी कृष्णा कर्म्मणा विचरिष्यति। न हि किञ्चिद्विजानाति कर्म्म कर्त्तुं यथा स्त्रियः ॥ १४ ॥ सुकुमारी च बाला च राजपुत्री यशस्विनी। पतिव्रता महाभागा कथन्नु विचरिष्यति ॥ १५ ॥ माल्यगन्धानलङ्कारान् वस्त्राणि विविधानि च। एतान्येवाभिजानाति यतो जाता हि भामिनी ॥ १६ ॥

द्रौपद्युवाच। सैरिन्ध्र्यो रक्षिता लोके भुजिष्याः सन्ति भारत। नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः ॥ १७ ॥ साहं ब्रुवाणा सैरिन्ध्री कुशला केशकर्म्मणि। युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ॥ १८ ॥ उषितास्मीति वक्ष्यामि पृष्टा राज्ञा च भारत। आत्मगुप्ता चरिष्यामि यन्मां त्वं परिपृच्छसि ॥ १९ ॥ सुदेष्णां प्रत्युपस्थास्ये राजभार्य्यां यशस्विनीम्। सा रक्षिष्यति मां प्राप्तां माभूत्ते दुःखमीदृशम् ॥ २० ॥

युधिष्ठिर उवाच। कल्याणं भाषसे कृष्णे कुले जाता भाविनि। न पापमभिजानासि साध्वी साध्वव्रते स्थिता।

यथा न दुष्कृदः पापा भवन्ति सुखिनः पुनः। कुर्यास्तथा त्वं कर्माणि लक्षयेयुर्न ते यथा ॥ १२ ॥

इति विराटपर्वणि पाण्डवप्रवेशपर्वणि युधिष्ठिरादिमन्त्रणे तृतीयोऽध्यायः ॥ ३ ॥

---

युधिष्ठिर उवाच। कर्माण्युक्तानि युष्माभिर्यानि यानि करिष्यथ। मम चापि यथा बुद्धिरुचिता विधिनिश्चयात् ॥ १ ॥ पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु। सूतपौरोगवैः सार्द्धं द्रुपदस्य निवेशने ॥ २ ॥ इन्द्रसेनमुखाश्चेमे रथानादाय केवलान्। यान्तु द्वारवतीं शीघ्रमिति मे वर्त्तते मतिः ॥ ३ ॥ इमाश्च नार्यो द्रौपद्याः सर्वाश्च परिचारिकाः। पञ्चालानेव गच्छन्तु सूतपौरोगवैः सह ॥ ४ ॥ सर्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः। गता ह्यस्मानपाकीर्य्य सर्वे द्वैतवनादिति ॥ ५ ॥

वैशम्पायन उवाच। एवं तेऽन्योऽन्यमामन्त्र्य कर्माण्युक्त्वा पृथक् पृथक्। धौम्यमामन्त्रयामास स च तान्मन्त्रमब्रवीत् ॥ ६ ॥

धौम्य उवाच। विहितं पाण्डवाः सर्वं ब्राह्मणेषु सुहृत्सु च। याने प्रहरणे चैव तथैवाग्निषु भारत ॥ ७ ॥ त्वया रक्षा विधातव्या कृष्णायाः फाल्गुणेन च। विदितं वो यथान्यायं लोकवृत्तमिदं नृप ॥ ८ ॥ विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः। एष धर्मश्च कामश्च अर्थश्चैव सनातनः ॥ ९ ॥ अतोऽहमपि वक्ष्यामि हेतुमत्र निबोधत। हन्तेमां राजवसतिं राजपुत्रा ब्रवीम्यहम् ॥ १० यथा राजकुलं प्राप्य सर्वान् दोषांस्तरिष्यथ। दुर्वसन्त्वं वै कौरव्या जानता राजवेश्मनि ॥ ११ ॥ अमानितैर्मानितैर्वा अज्ञातैः परिवत्सरम्। ततश्चतुर्दशे वर्षे चरिष्यथ यथासुखम् ॥ १२ ॥ पाण्डवाभिरर्यं लोके सर्वशस्त्रमयो महान्। भर्त्ता गोप्ताय भूतानां राजा

पुरुषविग्रहः ॥ १३ ॥ दिष्टद्वारो लभेत् द्रष्टुं रहस्येषु न विश्वसेत् । तदेवासनमन्विच्छेद्यत्र नाभिषजेत् परः ॥ १४ ॥ यो न यानं न पर्य्यङ्कं न पीठं न गजं रथम् । आरोहेत् सम्मतोऽस्मीति स राजवसतिं वसेत् ॥ १५ ॥ अथ यत्रैनमासीनं शङ्केरन् दुष्टचारिणः । न तत्रोपविशेद्यो वै स राजवसतिं वसेत् ॥ १६ ॥ न चानुशिष्याद्राजानमपृच्छन्तं कदाचन । तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ॥ १७ ॥ असूयन्ति हि राजानो जनाननृतवादिनः । तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥ १८ ॥ नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कदाचन । अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये ॥ १९ ॥ विदिते चास्य कुर्वीत कार्य्याणि सुलघून्यपि । एवं विचरतो राज्ञो न क्षतिर्जायते क्वचित् ॥ २० ॥ गच्छन्नपि परां भूमिमपृष्टो ह्यनियोजितः । जात्यन्ध इव मन्येत मर्य्यादामनुचिन्तयन् ॥ २१ ॥ न हि पुत्रं न नप्तारं न भ्रातरमरिन्दमाः । समतिक्रान्तमर्य्यादं पूजयन्ति नराधिपाः ॥ २२ ॥ यत्नाच्चोपचरेदेनमग्निवद्देववच्चिह । अनृतेनोपचीर्णो हि हन्यादेव न संशयः ॥ २३ ॥ यच्च भर्त्तानुयुञ्जीत तदेवानुवर्त्तयेत् । प्रमादमवलेपञ्च कोपञ्च परिवर्जयेत् ॥ २४ ॥ समर्थनासु सर्वासु हितञ्च प्रियमेव च । संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् ॥ २५ ॥ अनुकूलो भवेच्चास्य सर्वार्थेषु कथासु च । अप्रियं चाहितं यत्स्यात्तदस्मै नानुवर्णयेत् ॥ २६ ॥ नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः । अप्रमत्तश्च सततं हितं कुर्य्यात् प्रियञ्च यत् ॥ २७ ॥ नास्यानिष्टानि सेवेत नाहितैः सह संवदेत् । स्वस्थानान्न विकम्पेत स राजवसतिं वसेत् ॥ २८ ॥ दक्षिणं वाथ वामं वा पार्श्वमासीत पण्डितः । रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते ॥ २९ ॥ नित्यं हि प्रतिषिद्धन्तु पुरस्तादासनं महत् । न च सन्दर्शने किञ्चित् प्रवृत्तमपि सञ्जपेत् ॥ ३० ॥ अपि ह्येतद्दरिद्राणां व्यलीकं स्थानमुत्तमम् । न मृषाभिहितं राज्ञां मनु-

षु प्रकाशयेत् ॥३१॥ असूयन्ति हि राजानो नराननृतवादिनः।
तैव चावमन्यन्ते नरान् पण्डितमानिनः ॥ ३२ ॥ शूरोऽस्मीति न
मः स्याद्बुद्धिमानिति वा पुनः। प्रियमेवाचरन् राज्ञः प्रियो
वति भोगवान् ॥ ३३ ॥ ऐश्वर्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च
ाजतः। अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च ॥ ३४ ॥ यस्य
ोपो महाबाधः प्रसादश्च महाफलः। कस्तस्य मनसापीच्छेदनर्थं
ाज्ञसम्मतः ॥ ३५ ॥ न चोष्ठौ न भुजौ जानू न च वाक्यं समा-
िपेत्। सदा वातञ्च वाचञ्च ष्ठीवनञ्चाचरेच्छनैः ॥ ३६ ॥ हास्य-
स्तुषु चाप्यस्य वर्त्तमानेषु केषु चित्। नातिगाढ़ं प्रहृष्येन न
ाप्युन्मत्तवद्धसेत् ॥ ३७ ॥ न चातिधैर्य्येण चरेद्गुरुता हि व्रजे-
त्तथा। स्मितन्तु मृदुपूर्व्वेण दर्शयेदप्रमादजम ॥ ३८ ॥ लाभे न
हर्षयेद्यस्तु न व्यथेद्योऽवमानितः। असंमूढ़श्च यो नित्यं स
राजवसतिं वसेत् ॥ ३९ ॥ राजानं राजपुत्रं वा संवर्णयति यः
सदा। अमात्यः पण्डितो भूत्वा स चिरं तिष्ठते प्रिय ॥ ४० ॥
प्रगृहीतश्च योऽमात्यो निगृहीतश्च कारणैः। न निर्वदति राजानं
लभते सम्पदं पुनः ॥ ४१ ॥ प्रत्यक्षञ्च परोक्षञ्च गुणवादी विच-
क्षणः। उपजीवी भवेद्राज्ञो विषये योऽपि वा भवेत् ॥ ४२ ॥
अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत्तु यः। न स तिष्ठेच्चिरं
स्थाने गच्छेच्च प्राणसंशयम् ॥ ४३ ॥ श्रेयः सदात्मनो दृष्ट्वा परं
ाज्ञा न संवदेत्। विशेषयेन्न राजानं योग्यभूमिषु सर्वदा ॥ ४४ ॥
अम्लानो बलवाञ्छूरश्छायेवानुगतः सदा। सत्यवादी मृदुर्दान्तः
स राजवसतिं वसेत् ॥ ३५ ॥ अन्यस्मिन् प्रेष्यमाणे तु पुरस्ताद्यः
समुत्पतेत्। अहं किं करवाणीति स राजवसतिं वसेत् ॥ ४६ ॥
अन्तरे चैव बाह्ये च राज्ञा यश्चैव सर्व्वदा। आदिष्टो नैव कम्पेत
स राजवसतिं वसेत् ॥ ४७ ॥ यो वै गृहेभ्यः प्रवसन् प्रियाणां
नानुसंस्मरेत्। दुःखेन सुखमन्विच्छेत् स राजवसतिं वसेत् ॥४८॥

समवेषं न कुर्वीत नोच्चैः सन्निहितो हसेत्। न मन्त्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ॥ ४९ ॥ न कर्मणि नियुक्तः सन् धनं किञ्चिदुपस्पृशेत्। प्राप्नोति हि हरन् द्रव्यं बन्धनं यदि वा वधम् ॥ ५० ॥ यानं वस्त्रमलङ्कारं यच्चान्यत् सम्प्रयच्छति। तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ॥ ५१ ॥ एवं संयम्य चित्तानि यत्नतः पाण्डुनन्दनाः। सम्वत्सरमिमं तातास्तथाशीला बुभूषवः। अथ स्वविषयं प्राप्य यथाकामं चरिष्यथ ॥ ५२ ॥

युधिष्ठिर उवाच। अनुशिष्टाः स्म भद्रन्ते नैतद्वक्तास्ति कश्चन। कुन्तीमृते मातरं नो विदुरं वा महामतिम् ॥ ५३ ॥ यदेवानन्तरं कार्यं तद्भवान् कर्तुमर्हति। तारणायास्य दुःखस्य प्रस्थानाय जयाय च ॥ ५४ ॥

वैशम्पायन उवाच। एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः। अकरोद्विधिवत्सर्वं प्रस्थाने यद्विधीयते ॥ ५५ ॥ तेषां समिध्य तानग्नीन्मन्त्रवच्च जुहाव सः। समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ॥ ५६ ॥ अग्नीन् प्रदक्षिणीकृत्य ब्राह्मणांश्च तपोधनान्। याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः ॥ ५७ ॥ गतेषु तेषु वीरेषु धौम्योऽथ जपतांवरः। अग्निहोत्राण्युपादाय पाञ्चालानभ्यगच्छत ॥ ५८ ॥ इन्द्रसेनादयश्चैव यथोक्ताः प्राप्य यादवान्। रथानश्वांश्च रक्षन्तः सुखमूषुः सुसंवृताः ॥ ५९ ॥

इति विराटपर्वणि पाण्डवप्रवेशपर्वणि धौम्योपदेशे चतुर्थोऽध्यायः ॥ ४ ॥

वैशम्पायन उवाच। ते वीरा बद्धनिस्त्रिंशास्तथा बद्धकलापिनः। बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ॥१॥ ततस्ते दक्षिणं तीरमन्वगच्छन् पदातयः। निवृत्ता वनवासाद्धि स्वराष्ट्रं

पद्भ्यस्तदा ॥ २ ॥ वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः। विध्यन्तो मृगजातानि महेष्वासा महाबलाः ॥ ३ ॥ उत्तरेण दशार्णांस्ते पाञ्चालान् दक्षिणेन च। अन्तरेण यकृल्लोमाञ्शूरसेनांश्च पाण्डवाः ॥ ४ ॥ लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन् वनात्। धन्विनो बद्धनिस्त्रिंशा विवर्णाः श्मश्रुधारिणः ॥ ५ ॥ ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत्। पश्यैकपद्यो दृश्यन्ते क्षेत्राणि विविधानि च ॥ ६ ॥ व्यक्तं दूरे विराटस्य राजधानी भविष्यति। वसामेहापरां रात्रिं बलवान् मे परिश्रमः ॥ ७ ॥

युधिष्ठिर उवाच। धनञ्जय समुद्यम्य पाञ्चालीं वह भारत। राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ॥ ८ ॥

वैशम्पायन उवाच। तामादायार्जुनस्तूर्णं द्रौपदीं गजराडिव। संप्राप्य नगराभ्याशमवतारयदर्जुनः ॥ ९ ॥ स राजधानीं संप्राप्य कौन्तेयोऽर्जुनमब्रवीत्। क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ॥ १० ॥ सायुधाश्च प्रवेक्ष्यामो वयं तात पुरं यदि। समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ ११ ॥ गाण्डीवञ्च महद्गाढं लोके च विदितं नृणाम्। तच्चेदायुधमादाय गच्छामो नगरं वयम् ॥ १२ ॥ क्षिप्रमस्मान् विजानीयुर्मनुष्या नात्र संशयः। ततो द्वादश वर्षाणि प्रवेष्टव्यं वने पुनः। एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ॥ १३ ॥

अर्जुन उवाच। इयं कूटे मनुष्येन्द्र गहना महती शमी। भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ १४ ॥ न चापि विद्यते कश्चित् मनुष्य इति मे मतिः। योऽस्मान्निदधतो द्रष्टा भवेच्छस्त्राणि पाण्डवाः ॥ १५ ॥ उत्पथे हि वने जाता मृगव्यालनिषेविते। समीपे च श्मशानस्य गहनस्य विशेषतः ॥ १६ ॥ समाधायायुधं शम्यां गच्छामो नगरं प्रति। एवमत्र यथायोगं विहरिष्याम भारत ॥ १७ ॥

धाञ्चरन्ति ते ॥ ३४ ॥ आगोपालाविपालेभ्य आचक्षाणाः परन्तप । आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिवर्हणाः ॥ ३५ ॥ जयो जयन्तो विजयो जयत्सेनो जयद्बलः । इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥ ३६ ॥ ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत् । अज्ञातचर्य्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ ३७ ॥

इति विराटपर्वणि पाण्डवप्रवेशपर्वणि अस्त्रसंस्थापने पञ्चमोऽध्यायः ॥ ५ ॥

---

वैशम्पायन उवाच । विराटनगरं रम्यं गच्छमानो युधिष्ठिरः । अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ १ ॥ यशोदागर्भसम्भूता नारायणवरप्रियम् । नन्दगोपकुले जातां मङ्गल्यां कुलवर्द्धनीम् ॥ २ ॥ कंसविद्रावणकरीमसुराणां क्षयङ्करीम् । शिलातटविनिक्षिप्तामाकाशं प्रति गामिनीम् ॥ ३ ॥ वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् । दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ॥ ४ ॥ भारावतरणे पुण्ये ये स्मरन्ति सदा शिवाम् । तान् वै तारयते पापात् पङ्के गामिव दुर्बलाम् ॥ ५ ॥ स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसम्भवैः । आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः ॥ ६ ॥ नमोऽस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि । बालार्कसदृशाकारे पूर्णचन्द्रनिभानने ॥ ७ ॥ चतुर्भुजे चतुर्वक्त्रे पीनश्रोणिपयोधरे । मयूरपिच्छवलये केयूराङ्गदधारिणि ॥ ८ ॥ भासि देवि यथा पद्मा नारायणपरिग्रहः । स्वरूपं ब्रह्मचर्य्यञ्च विशदं तव खेचरि ॥ ९ ॥ कृष्णच्छविसमा कृष्णा सङ्कर्षणसमानना । बिभ्रती विपुलौ बाहू शक्रध्वजसमुच्छ्रयौ ॥ १० ॥ पात्री च पङ्कजी घण्टी स्त्री विशुद्धा च या भुवि । पाशन्धनुर्महाचक्रं विविधान्यायुधानि च ॥ ११ ॥ कुण्डलाभ्यां

सुपूर्णाभ्यां कर्णाभ्याञ्च विभूषिता। चन्द्रविस्पर्द्धिना देवि मुखेन त्वं विराजसे ॥ १२ ॥ मुकुटेन विचित्रेण केशबन्धेन शोभिना। भुजङ्गाभोगवासेन श्रोणिसूत्रेण राजता ॥ १३ ॥ विभ्राजसे चाबद्धेन भोगेनेवेह मन्दरः। ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसि ॥ १४ ॥ कौमारं व्रतमास्थाय त्रिदिवं पावितं त्वया। तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ॥ १५ ॥ त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि। प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव ॥ १६ ॥ जया त्वं विजया चैव संग्रामे च जयप्रदा। ममापि विजयं देहि वरदा त्वञ्च साम्प्रतम् ॥ १७ ॥ विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम्। कालि कालि महाकालि सीधुमांसपशुप्रिये ॥ १८ ॥ कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणि। भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ॥ १९ ॥ प्रणमन्ति च ये त्वां हि प्रभाते तु नरा भुवि। न तेषां दुर्लभं किञ्चित् पुत्रतो धनतोऽपि वा ॥ २० ॥ दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः। कान्तारेष्ववसन्नानां मग्नानाञ्च महार्णवे ॥ २१ ॥ दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम्। जलप्रतरणे चैव कान्तारेष्वटवीषु च ॥ २२ ॥ ये स्मरन्ति महादेवि न च सीदन्ति ते नराः। त्वं कीर्त्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या सन्ततिर्मतिः ॥ २३ ॥ सन्ध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कान्तिः क्षमा दया। नृणाञ्च बन्धनं मोहं पुत्रनाशं धनक्षयम्। व्याधिं मृत्युं भयञ्चैव पूजिता नाशयिष्यसि ॥ २४ ॥ सोऽहं राज्यात् परिभ्रष्टः शरणं त्वां प्रपन्नवान्। प्रणतश्च यथा मूर्द्ध्ना तव देवि सुरेश्वरि ॥ २५ ॥ त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः। शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ॥ २६ ॥ एवं स्तुता हि सा देवी दर्शयामास पाण्डवम्। उपगम्य तु राजानमिदं वचनमब्रवीत् ॥ २७ ॥

देव्युवाच। शृणु राजन्महाबाहो मदीयं वचनं प्रभो।

विष्यत्यचिरादिव संग्रामे विजयस्तव ॥ २८ ॥ मम प्रसादा-न्निर्जित्य हत्वा कौरववाहिनीम् । राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ॥ २९ ॥ भ्रातृभिः सहितो राजन् प्रीतिं प्राप्स्यसि पुष्कलाम् । मत्प्रसादाच्च ते सौख्यमारोग्यञ्च भविष्यति ॥ ३० ॥ ये च सङ्कीर्त्तयिष्यन्ति लोके विगतकल्मषाः । तेषां तुष्टा प्रदा-स्यामि राज्यमायुर्वपुः सुतम् ॥ ३१ ॥ प्रवासे नगरे वापि संग्रामे शत्रुसङ्कटे । अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ॥ ३२ ॥ ये स्मरिष्यन्ति मां राजन् यथाहं भवता स्मृता । न तेषां दुर्लभं किञ्चिदस्मिंल्लोके भविष्यति ॥ ३३ ॥ इदं स्तोत्रवरं भक्त्या शृणु-याद्वा पठेत वा । तस्य सर्वाणि कार्य्याणि सिद्धिं यास्यन्ति पाण्डवाः ॥ ३४ ॥ मत्प्रसादाच्च वः सर्वान् विराटनगरे स्थितान् । न प्रज्ञास्यन्ति कुरवो नरा वा तन्निवासिनः ॥ ३५ ॥ इत्युक्त्वा वरदा देवी युधिष्ठिरमरिन्दमम् । रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ॥ ३६ ॥

इति विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि श्रीदुर्गास्तवे षष्ठोऽध्यायः ॥ ६ ॥

---

वैशम्पायन उवाच । ततो विराटं प्रथमं युधिष्ठिरो राजा सभायामुपविष्टमाव्रजत् । वैदूर्य्यरूपान् प्रतिमुच्य काञ्चनानक्षान् स कक्षे परिगृह्य वाससा ॥ १ ॥ नराधिपो राष्ट्रपतिं यशस्विनं महायशाः कौरववंशवर्द्धनः । महानुभावो नरराजसत्कृतो दुरा-सदस्तीक्ष्णविषो यथोरगः ॥ २ ॥ बलेन रूपेण नरर्षभो महा-नपूर्वरूपेण यथामरस्तथा । महाभ्रजालैरिव संवृतो रविर्यथा-नलो भस्मवृतश्च वीर्य्यवान् ॥ ३ ॥ तमापतन्तं प्रसमीक्ष्य पाण्डवं विराटराडिन्दुमिवाभ्रसंवृतम् । समागतं पूर्णशशिप्रभाननं महा-

नुभावं न चिरेण दृष्टवान् ॥ ४ ॥ मन्त्रिद्विजान् सूतमुखान् विशस्तथा ये चापि केचित् परितः समासते। पप्रच्छ कोऽयं प्रथमं समीयिवान् नृपोपमोऽयं समवेक्षते सभाम् ॥ ५ ॥ न तु द्विजोऽयं भविता नरोत्तमः पतिः पृथिव्या इति मे मनोगतम्। न चास्य दासो न रथो न कुञ्जरः समीपतो भ्राजति चायमिन्द्रवत् ॥ ६ ॥ शरीरलिङ्गैरुपसूचितो ह्ययं मूर्द्धाभिषिक्तोऽस्तीति मे मनोगतम्। समीपमायाति च मे गतव्यथो यथा गजस्तामरसीं मदोत्कटः ॥ ७॥ वितर्कयन्तन्तु नरर्षभस्तदा युधिष्ठिरोऽभ्येत्य विराटमब्रवीत्। सम्राड् विजानात्विह जीवनार्थिनं विनष्टसर्वस्वमुपागतं द्विजम् ॥८ इहाहमिच्छामि तवानघान्तिके वस्तुं यथा कामचरस्तथा विभो। तमब्रवीत् स्वागतमित्यनन्तरं राजा प्रहृष्टः प्रतिसंगृहाण च ॥९॥ तं राजसिंहं प्रतिगृह्य राजा प्रीत्यात्मना चैवमिदं बभाषे। कामेन ताताभिवदाम्यहं त्वा कस्यासि राज्ञो विषयादिहागतः। गोत्रञ्च नामापि च शंस तत्त्वतः किं चापि शिल्पं तव विद्यते कृतम् ॥१०॥

युधिष्ठिर उवाच। युधिष्ठिरस्यासमहं पुरा सखा वैयाघ्रपद्यः पुनरस्मि विप्रः। अक्षान् प्रयोक्तुं कुशलोऽस्मि देविता कङ्केति नाम्नास्मि विराट विश्रुतः ॥ ११ ॥

विराट उवाच। ददामि ते हन्त वरं यमिच्छसि प्रशाधि मत्स्यान्वशगो ह्यहं तव। प्रियाश्च धूर्त्ता मम देविनः सदा भवांश्च देवोपम राज्यमर्हति ॥ १२॥

युधिष्ठिर उवाच। आप्तो विवादः प्रथमं विशाम्पते न विद्यते कश्चन मत्स्य हीनतः। न मे जितः कश्चन धारयेद्धनं वरो ममैषोऽस्तु तव प्रसादजः ॥ १३ ॥

विराट उवाच। हन्यामवध्यं यदि तेऽप्रियञ्चरेत् प्रव्राजयेयं विषयाद्द्विजांस्तथा। शृण्वन्तु मे जानपदाः समागताः कङ्को यथाहं विषये प्रभुस्तथा ॥ १४ ॥ समानयानो भवितासि मे सखा प्रभूत-

वस्तो बहुपानभोजनः। पश्येस्त्वमन्तश्च बहिश्च सर्व्वदा कृतञ्च ते द्वारमपावृतं मया ॥१५॥ ये त्वानुवादेयुरवृत्तिकर्षिता ब्रूयाश्च तेषां वचनेन मां सदा। दास्यामि सर्व्वं तदहं न संशयो न ते भयं विद्यति सन्निधौ मम ॥ १६ ॥

वैशम्पायन उवाच। एवं स लब्ध्वा तु वरं समागमं विराट-राजेन नरर्षभस्तदा। उवास धीरः परमार्च्चितः सुखी न चापि कश्चिच्चरितं बुबोध तत ॥ १७ ॥

इति विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरप्रवेशे सप्तमोऽध्यायः ॥ ७ ॥

---

वैशम्पायन उवाच। अथापरो भीमबलः श्रिया ज्वलन्नुपा-ययौ सिंहविलासविक्रमः। खजाञ्च दर्व्वीञ्च करेण धारयन्नसिञ्च कालाङ्गमकोषमव्रणम् ॥ १ ॥ स सूदरूपः परमेण वर्च्चसा रवि-र्यथा लोकमिमं प्रकाशयन्। सुकृष्णवासा गिरिराजसारवांस्तं मत्स्यराजं समुपेत्य तस्थिवान् ॥ २ ॥ तं प्रेक्ष्य राजानमिवान्तिका-गतं ततोऽब्रवीज्जानपदान् समागतान्। सिंहोन्नतांसोऽयमतीव रूपवान् प्रदृश्यते को नु नरर्षभो युवा ॥ ३ ॥ अदृष्टपूर्व्वः पुरुषो रविर्यथा वितर्कयन्नास्य लभामि निश्चयम्। तथास्य चित्तं ह्यपि संवितर्कयन्नरर्षभस्यास्य न यामि तत्त्वतः ॥ ४ ॥ दृष्ट्वैव चैनं न विचारयाम्यहं गन्धर्व्वराजो यदि वा पुरन्दरः। जानीत कोऽयं मम दर्शने स्थितो यदीप्सितं तल्लभतां ह मा चिरम् ॥ ५ ॥ विराट-वाक्येन च तेन चोदिता नरा विराटस्य सुशीघ्रगामिनः। उपेत्य कौन्तेयमथाब्रुवंस्तदा यथा स राजावदद्च्युतानुजम् ॥ ६ ॥ ततो विराटं समुपेत्य पाण्डवस्त्वदीनरूपं वचनं महामनाः। उवाच सूदोऽस्मि नरेन्द्र बल्लवो भजस्व मां व्यञ्जनकारमुत्तमम् ॥ ७ ॥

तामुवाच राजेन्द्र सैरिन्ध्र्यहमिहागता ॥ ४ ॥ कर्म चेच्छामि वै कर्तुं तस्य यो मां युयुक्षति । तस्या रूपेण वेषेण श्लक्ष्णया च तथा गिरा ॥ ५ ॥ नाश्रद्दधत तां दासीमन्नहेतोरुपस्थिताम् । विराटस्य तु कैकेयी भार्या परमसम्मता ॥ ६ ॥ आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् । सा समीक्ष्य तथारूपामनाथामेकवाससम् ॥ ७ ॥ समाहूयाब्रवीद्भद्रे का त्वं किञ्च चिकीर्षसि । सा तामुवाच राजेन्द्र सैरिन्ध्र्यहमुपागता । कर्म चेच्छाम्यहं कर्तुं तस्य यो मां युयुक्षति ॥ ८ ॥

सुदेष्णोवाच । नैवंरूपा भवन्त्येव यथा वदसि भाविनि । प्रेषयन्ती च वै दासीर्दासांश्च विविधान् बहून् ॥ ९ ॥ नोच्चगुल्फा संहतोरुस्त्रिगम्भीरा षडुन्नता । रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी ॥ १० ॥ सुकेशी सुस्तनी श्यामा पीनश्रोणिपयोधरा । तेन तेनैव सम्पन्ना काश्मीरीव तुरङ्गमी ॥ ११ ॥ अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा । कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना ॥ १२ ॥ शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया । शारदोत्पलसेविन्या रूपेण सदृशी श्रिया ॥ १३ ॥ का त्वं ब्रूहि यथा भद्रे नासि दासी कथञ्चन । यक्षी वा यदि वा देवी गन्धर्वी यदि वाप्सराः ॥१४॥ देवकन्या भुजङ्गी वा नगरस्याथ देवता । विद्याधरी किन्नरी वा यदि वा रोहिणी स्वयम् ॥१५॥ अलम्बुषा मिश्रकेशी पुण्डरीकाथ मालिनी । इन्द्राणी वारुणी वा त्वं त्वष्टुर्धातुः प्रजापतेः । देव्यो देवेषु विख्यातास्तासां त्वं कतमा शुभे ॥ १६ ॥

द्रौपद्युवाच । नास्मि देवी न गन्धर्वी नासुरी न च राक्षसी । सैरिन्ध्री तु भुजिष्यास्मि सत्यमेतद्ब्रवीमि ते ॥ १७ ॥ केशान् जानाम्यहं कर्तुं पिंषे साधु विलेपनम् । मल्लिकोत्पलपद्मानां चम्पकानां तथा शुभे ॥ १८ ॥ ग्रथयिष्ये विचित्राश्च स्रजः परमशोभनाः । आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम् ॥१९॥

कृष्णाञ्च भार्य्यां पाण्डूना कुरूणामेकसुन्दरीम् । तत्र तत्र चरान्यका लभमाना सुभोजनम् ॥ २० ॥ तावत्तावच्चरन्ति लभे तावत्ताव- द्रमे तथा । मालिनीत्येव मे नाम स्वयं देवी चकार सा । साहं- मद्यागता देवि सुदेष्णे त्वन्निवेशनम् ॥ २१ ॥

सुदेष्णोवाच । मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते । न चेदिच्छति राजा त्वां गच्छेत् सर्वेण चेतसा ॥ २२ ॥ स्त्रियो राजकुले याश्च याश्चेमा मम वेश्मनि । प्रसक्तास्त्वां निरीक्षन्ते पुमांसं कं न मोहये ॥ २३ ॥ वृक्षांश्चावस्थितान् पश्य य इमे मम वेश्मनि । तेऽपि त्वां सन्नमन्तीव पुमांसं क न मोहये ॥२४॥ राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषम् । विहाय मां वरारोहे गच्छेत् सर्वेण चेतसा ॥ २५ ॥ यं हि त्वमनवद्याङ्गी तर- लायतलोचने । प्रसक्तमभिवीक्षेथाः स कामवशगो भवेत् ॥ २६ ॥ यश्च त्वां सततं पश्येत् पुरुषश्चारुहासिनि । एवं सर्वानवद्याङ्गि स चानङ्गवशो भवेत् ॥ २७ ॥ अध्यारोहेद्यथा वृक्षान् वधायैवात्मनो नरः । राजवेश्मनि ते सुभ्रु रोहितं स्यात्तथा मम ॥ २८ ॥ यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मनः । तथाविधमहं मन्ये वासं तव शुचिस्मिते ॥ २९ ॥

द्रौपद्युवाच । नास्मि लभ्या विराटेन न चान्येन कदाचन । गन्धर्वाः पतयो मह्यं युवानः पञ्च भाविनि ॥ ३० ॥ पुत्रा गन्धर्व- राजस्य महासत्त्वस्य कस्यचित् । रक्षन्ति ते च मां नित्यं दुःखा- चारा तथा ह्यहम ॥ ३१ ॥ यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् । प्रीयेरंस्तेन वासेन गन्धर्वाः पतयो मम ॥ ३२ ॥ यो हि मां पुरुषो गृध्येद्यथान्याः प्राकृताः स्त्रियः । तामेव निवसेद्रात्रिं प्रविश्य च परां तनुम् ॥ ३३ ॥ न चाप्यहं चालयितुं शक्या केनचिदङ्गने । दुःखशीला हि गन्धर्वास्ते च बलवत्प्रियाः । प्रच्छन्नाश्चापि रक्षन्ति ते मां नित्यं शुचिस्मिते ॥ ३४ ॥

सुदेष्णोवाच। एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि। न च पादौ न चोच्छिष्टं स्प्रक्ष्यसि त्वं कथञ्चन ॥ ३५ ॥

वैशम्पायन उवाच। एवं कृष्णा विराटस्य भार्यया परिसान्त्विता। उवास नगरे तस्मिन् पतिधर्मवती सती। न चैनां वेद तत्रान्यस्तत्त्वेन जनमेजय ॥ ३६ ॥

इति विराटपर्वणि पाण्डवप्रवेशपर्वणि द्रौपदीप्रवेशे नवमोऽध्यायः ॥ ९ ॥

---

वैशम्पायन उवाच। सहदेवोऽपि गोपाना कृत्वा वेशमनुत्तमम्। भाषाञ्चैषां समास्थाय विराटं समुपाययौ ॥ १ ॥ गोष्ठमासाद्य तिष्ठन्तं भवनस्य समीपतः। राजाथ दृष्ट्वा पुरुषान् प्राहिणोज्जातविस्मयः ॥ २ ॥ तमायान्तमभिप्रेक्ष्य भ्राजमानं नरर्षभम्। समुपस्थाय वै राजा पप्रच्छ कुरुनन्दनम् ॥ ३ ॥ कस्य वा त्वं कुतो वा त्वं किं वा तात चिकीर्षसि। न हि मे दृष्टपूर्वस्त्वं तत्त्वं ब्रूहि नरर्षभ ॥ ४ ॥ सम्प्राप्य राजानममित्रतापनं ततोऽब्रवीन्मेघमहौघनिस्वनः। वैश्योऽस्मि नाम्नाहमरिष्टनेमिर्गोसङ्ख्य आसं कुरुपुङ्गवानाम् ॥ ५ ॥ वस्तुं त्वयीच्छामि विशांवरिष्ठ तान्राजसिंहान्न हि वेद्मि पार्थान्। न शक्यते जीवितुमप्यकर्मणा न च त्वदन्यो मम रोचते नृपः ॥ ६ ॥

विराट उवाच। त्वं ब्राह्मणो यदि वा क्षत्रियोऽसि समुद्रनेमीश्वररूपवानसि। आचक्ष्व मे तत्त्वममित्रकर्षण न वैश्यकर्म त्वयि विद्यते क्षमम् ॥ ७ ॥ कस्यासि राज्ञो विषयादिहागतः किं चापि शिल्पं तव विद्यते कृतम्। कथं त्वमस्मासु निवत्स्यसे सदा वदस्व किञ्चापि तवेह वेतनम् ॥ ८ ॥

सहदेव उवाच। पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधि-

ष्ठिर । तस्याष्टशतसाहस्रा गवां वर्गाः शतं शतम् ॥ ९ ॥ अपरे दशसाहस्रा द्विस्तावन्तस्तथापरे । तेषां गोसङ्ख्य आसं वै तन्तिपालेति मां विदुः ॥ १० ॥ भूतं भव्यं भविष्यच्च यच्च सङ्ख्यागतं गवाम् । न मेऽस्त्यविदितं किञ्चित् समन्ताद्दशयोजनम् ॥११॥ गुणाः सुविदिता ह्यासन्मम तस्य महात्मनः । आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ॥ १२ ॥ क्षिप्रञ्च गावो बहुला भवन्ति न तासु रोगो भवतीह कश्चन । तैस्तैरुपायैर्विदितं मयैतदेतानि शिल्पानि मयि स्थितानि ॥ १३ ॥ ऋषभांश्चापि जानामि राजन् पूजितलक्षणान् । येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥१४॥

विराट उवाच । शतं सहस्राणि समाहितानि सवर्णवर्णस्य विमिश्रितान् गुणैः । पशून् सपालान् भवते ददाम्यहं त्वदाश्रया मे पशवो भवन्त्विह ॥ १५ ॥

वैशम्पायन उवाच । तथा स राज्ञोऽविदितो विशाम्पते उवास तत्रैव सुखं नरोत्तमः । न चैनमन्येऽपि विदुः कथञ्चन प्रादाच्च तस्मै भरणं यथेप्सितम् ॥ १६ ॥

इति विराटपर्वणि पाण्डवप्रवेशपर्वणि सहदेवप्रवेशे दशमोऽध्यायः ॥ १० ॥

---

वैशम्पायन उवाच । अथापरोऽदृश्यत रूपसम्पदा स्त्रीणामलङ्कारधरो बृहत्पुमान् । प्राकारवप्रे प्रतिमुच्य कुण्डले दीर्घे च कम्बूपरिहाटके शुभे ॥ १ ॥ बहूंश्च दीर्घांश्च विकीर्य मूर्धजान्महाभुजो वारणतुल्यविक्रमः । गतेन भूमिं प्रतिकम्पयंस्तदा विराटमासाद्य सभासमीपतः ॥ २ ॥ तं प्रेक्ष्य राजोपगतं सभातले व्याजात् प्रतिच्छन्नमरिप्रमाथिनम् । विराजमानं परमेण वर्चसा सुतं महेन्द्रस्य गजेन्द्रविक्रमम् ॥ ३ ॥ सर्वानपृच्छच्च

सभानुचारिणः कुतोऽयमायाति पुरा न मे श्रुतः । न चैनमूचु-
र्विदितं तदा नराः सविस्मयं वाक्यमिदं नृपोऽब्रवीत् ॥ ४ ॥ सर्व्वो-
पपन्नः पुरुषोऽमरोपमः श्यामो युवा वारणयूथपोपमः । आमुच्य
कम्बूपरि हाटके शुभे विमुच्य वेणीमपिनह्य कुण्डले ॥ ५ ॥ स्रग्वी
सुकेशः परिधाय चान्यथा शुशोभ धन्वी कवची शरी तथा । आरुह्य
यानं परिधावतां भवान् सुतैः समो मे भव वा मया समः ॥ ६ ॥
वृद्धो ह्यहं वै परिहातुकामः सर्वान् मत्स्यांस्तरसा पालयस्व ।
नैवंविधाः क्लीवरूपा भवन्ति कथञ्चनेति प्रतिभाति मे मनः ॥ ७ ॥

अर्जुन उवाच । गायामि नृत्याम्यथ वादयामि भद्रोऽस्मि
नृत्ये कुशलोऽस्मि गीते । त्वमुत्तरायै प्रदिशस्व मां स्वयं भवामि
देव्या नरदेव नर्त्तकः ॥ ८ ॥ इदन्तु रूपं मम येन किन्तव प्रकी-
र्त्तयित्वा भृशशोकवर्द्धनम् । बृहन्नलां मां नरदेव विद्धि सुतं सुतां
वा पितृमातृवर्ज्जिताम् ॥ ९ ॥

विराट उवाच । ददामि ते हन्त वरं बृहन्नले सुतास्तु मे
नर्त्तय याश्च तादृशीः । इदन्तु ते कर्म समं न मे मतं समुद्रनेमिं
पृथिवीं त्वमर्हसि ॥ १० ॥

वैशम्पायन उवाच । बृहन्नलां तामभिवीक्ष्य मत्स्यराट् कलासु
नृत्येषु तथैव वादिते । सम्मन्त्र्य राजा विविधैः स्वमन्त्रिभिः
परीक्ष्य चैनं प्रमदाभिराशु वै ॥ ११ ॥ अपुंस्त्वमप्यस्य निशम्य च
स्थिरं ततः कुमारीपुरमुत्ससर्ज्ज ताम् । स शिक्षयामास च गीत-
वादितं सुता विराटस्य धनञ्जयः प्रभुः ॥ १२ ॥ सखीश्च तस्याः
परिचारिकास्तथा प्रियश्च तासां स बभूव पाण्डवः । तथा स
सत्रेण धनञ्जयो वसन् प्रियाणि कुर्व्वन् सह ताभिरात्मवान् । तथा
स तं तत्र न जज्ञिरे जना बहिश्चरा वाप्यथ वान्तरेचराः ॥ १३ ॥

इति विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि अर्जुनप्रवेशे
एकादशोऽध्यायः ॥ ११ ॥

वैशम्पायन उवाच। अथापरोऽदृश्यत पाण्डवः प्रभुर्विराट-राज्ञं तरसा समीयिवान्। तमापतन्तं ददृशे पृथग्जनो विमुक्त-मभ्रादिव सूर्य्यमण्डलम् ॥ ११ ॥ स वै हयानैक्षत तांस्ततस्ततः समीक्षमाणं च ददर्श मत्स्यराट्। ततोऽब्रवीत्ताननुगान्नरेश्वरः कुतोऽयमायाति नरोऽमरप्रभः ॥ २ ॥ अयं हयान्वीक्षति माम-कान् दृढं ध्रुवं हयज्ञो भविता विचक्षणः। प्रवेश्यतामेष समीप-माशु मे विभाति वीरो हि यथामरस्तथा ॥ ३ ॥ अभ्येत्य राजान-ममित्रहाब्रवीज्जयोऽस्तु ते पार्थिव भद्रमस्तु च। हयेषु युक्तो नृपसम्मतः सदा तवाश्वसूतो निपुणो भवाम्यहम् ॥ ४ ॥

विराट उवाच। ददामि यानानि धनं निवेशनं ममाश्वसूतो भवितुं त्वमर्हसि। कुतोऽसि कस्यासि कथं त्वमागतः प्रब्रूहि शिल्पं तव विद्यते च यत् ॥ ५ ॥

नकुल उवाच। पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधि-ष्ठिरः। तेनाहमश्वेषु पुरा नियुक्तः शत्रुकर्षण ॥ ६ ॥ अश्वानां प्रकृतिं वेद्मि विनयञ्चापि सर्वशः। दुष्टानां प्रतिपत्तिञ्च कृत्स्नञ्चैव चिकित्सितम् ॥ ७ ॥ न कातरं स्यान्मम जातु वाहनं न मेऽस्ति दुष्टा वडवा कुतो हयाः। जनस्तु मामाह स चापि पाण्डवो युधिष्ठिरो ग्रन्थिकमेव नामतः ॥ ८ ॥

विराट उवाच। यदस्ति किञ्चिन्मम वाजिवाहनं तदस्तु सर्वं त्वदधीनमद्य वै। ये चापि केचिन्मम वाजियोजकास्त्वदाश्रयाः सारथयश्च सन्तु मे ॥ ९ ॥ इदं तवेष्टं यदि वै सुरोपम ब्रवीहि यत्ते प्रसमीक्षितं वसु। न तेऽनुरूपं हयकर्म विद्यते प्रभासि राजेव हि सम्मतो मम ॥ १० ॥ युधिष्ठिरस्येव हि दर्शनेन मे समं तवेदं प्रियदर्श दर्शनम्। कथन्तु भृत्यैः स विनाकृतो वने वसत्यनिन्द्यो रमते च पाण्डवः ॥ ११ ॥

वैशम्पायन उवाच। तथा स गन्धर्ववरोपमो युवा विराट-

राज्ञा मुदितेन पूजितः । न चैनमन्येऽपि विदुः कथञ्चन प्रियाभि-
रामं विचरन्तमन्तरा ॥ १२ ॥ एवं हि मत्स्ये न्यवसन्त पाण्डवा
यथाप्रतिज्ञाभिरमोघदर्शनाः । अज्ञातचर्य्यां व्यचरन् समाहिताः
समुद्रनेमीपतयोऽतिदु खिताः ॥ १३ ॥

इति विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि नकुलप्रवेशे
द्वादशोऽध्यायः समाप्तञ्च पाण्डवप्रवेशपर्व्व ॥ १२ ॥

---

## अथ समयपालनपर्व्व ।

जनमेजय उवाच । एवं ते मत्स्यनगरे प्रच्छन्नाः कुरुनन्दनाः ।
अत ऊर्द्धं महावीर्य्याः किमकुर्व्वत वै द्विज ॥ १ ॥
वैशम्पायन उवाच । एवं मत्स्यस्य नगरे प्रच्छन्नाः कुरु-
नन्दनाः । आराधयन्तो राजानं यदकुर्व्वत तच्छृणु ॥ २ ॥ तृण-
विन्दुप्रसादाच्च धर्म्मस्य च महात्मनः । अज्ञातवासमेवन्तु विराट-
नगरेऽवसन् ॥ ३ ॥ युधिष्ठिरः सभास्तारो मत्स्यानामभवत् प्रियः ।
तथैव च विराटस्य सपुत्रस्य विशाम्पते ॥ ४ ॥ स चाक्षहृदयज्ञस्तान्
क्रीड़यामास पाण्डवः । अक्षवत्यां यथाकामं सूत्रबद्धानिव द्विजान्
॥ ५ ॥ अज्ञातञ्च विराटस्य विजित्य वसु धर्म्मराट् । भ्रातृभ्यः
पुरुषव्याघ्रो यथार्हं संप्रयच्छति ॥ ६ ॥ भीमसेनोऽपि मांसानि
भक्ष्याणि विविधानि च । अतिसृष्टानि मत्स्येन विक्रीणीते युधि-
ष्ठिरे ॥ ७ ॥ वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्ज्जुनः । विक्री-
णानश्च सर्व्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥ ८ ॥ सहदेवोऽपि गोपानां
वेशमास्थाय पाण्डवः । दधि क्षीरं घृतञ्चैव पाण्डवेभ्यः प्रय-
च्छति ॥ ९ ॥ नकुलोऽपि धनं लब्ध्वा कृते कर्म्मणि वाजिनाम् ।
तुष्टे तस्मिन्नृपतौ पाण्डवेभ्यः प्रयच्छति ॥ १० ॥ कृष्णा तु सर्व्वान्

भ्रातृस्तान्निरीक्षन्ती तपस्विनी। यथा पुनरविज्ञाता तथा चरति भाविनी ॥ ११ ॥ एवं सम्पादयन्तस्ते तदान्योऽन्यं महारथाः। विराटनगरे चेरुः पुनर्गर्भधृता इव ॥ १२ ॥ सशङ्का धार्त्तराष्ट्रस्य भयात् पाण्डुसुतास्तदा। प्रेक्षमाणास्तदा कृष्णामूषुश्छन्ना नराधिपाः ॥ १३ ॥ अथ मासे चतुर्थे तु ब्रह्मणः सुमहोत्सवः। आसीत् समृद्धो मत्स्येषु पुरुषाणां सुसम्मतः ॥ १४ ॥ तत्र मल्लाः समापेतुर्दिग्भ्यो राजन् सहस्रशः। समाजे ब्रह्मणो राजन् यथा पशुपतेरिव ॥ १५ ॥ महाकाया महावीर्याः कालखञ्जा इवासुराः। वीर्योन्मत्ता बलोदग्रा राज्ञा समभिपूजिताः ॥ १६ ॥ सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः। असकृल्लब्धलक्ष्यास्ते रङ्गे पार्थिवसन्निधौ ॥ १७ ॥ तेषामेको महानासीत सर्वमल्लानथाह्वयत्। आवल्गमानं तं रङ्गे नोपतिष्ठति कश्चन ॥ १८ ॥ यदा सर्वे विमनसस्ते मल्ला हतचेतसः। अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ॥ १९ ॥ चोद्यमानस्ततो भीमो दुःखेनैवाकरोन्मतिम्। न हि शक्नोति विवृतं प्रत्याख्यातुं नराधिपम् ॥ २० ॥ ततः स पुरुषव्याघ्रः शार्दूलशिथिलञ्चरन्। प्रविवेश महारङ्गं विराटमभिपूजयन् ॥ २१ ॥ बबन्ध कक्षां कौन्तेयस्ततः संहर्षयन् जनम्। ततस्तु वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ॥२२॥ जीमूतं नाम तं तत्र मल्लं प्रख्यातविक्रमम्। तावुभौ सुमहोत्साहावुभौ भीमपराक्रमौ ॥ २३ ॥ मत्ताविव महाकायौ वारणौ षष्टिहायनौ। ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः ॥ २४ ॥ वीरौ परमसंहृष्टावन्योऽन्यजयकाङ्क्षिणौ। आसीत सुभीमः सम्पातो वज्रपर्वतयोरिव ॥ २५ ॥ उभौ परमसंहृष्टौ बलेनातिबलावुभौ। अन्योऽन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥ २६ ॥ उभौ परमसंहृष्टौ मत्ताविव महागजौ। कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः ॥ २७ ॥ सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा।

क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः ॥ २८ ॥ तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च । शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः॥२९॥ जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः । तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा ॥ ३० ॥ बलप्राणेन शूराणां समाजोत्सवसन्निधौ । अरज्यत जनः सर्व्वः सोत्क्रुष्टनिनदोत्थितः ॥ ३१ ॥ बलिनो संयुगे राजन् वृत्रवासवयोरिव । प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ॥ ३२ ॥ आकर्षतुरथान्योऽन्यं जानुभिश्चापि जघ्नतुः । ततः शब्देन महता भर्त्सयन्तौ परस्परम् ॥ ३३ ॥ व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ । बाहुभिः समसज्जेतामायसैः परिघैरिव ॥३४॥ चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा । निनदन्तमभिक्रोशन् शार्द्दूल इव वारणम् ॥ ३५ ॥ समुद्यम्य महाबाहुर्भ्रामयामास वीर्य्यवान् । ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम् ॥ ३६ ॥ भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम् । प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः ॥ ३७ ॥ तस्मिन् विनिहते वीरे जीमूते लोकविश्रुते । विराटः परमं हर्षमगच्छद्बान्धवैः सह ॥ ३८ ॥ प्रहर्षात् प्रददौ वित्तं बहु राजा महामनाः । बल्लवाय महारङ्गे यथा वैश्रवणस्तथा ॥ ३९ ॥ एवं स सुबहून् मल्लान् पुरुषांश्च महाबलान् । विनिघ्नन् मत्स्यराजस्य प्रीतिमाहरदुत्तमाम् ॥ ४० ॥ यदास्य तुल्यः पुरुषो न कश्चित्तत्र विद्यते । ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत् ॥ ४१ ॥ पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः । योध्यते स विराटेन सिंहैर्मत्तैर्महाबलैः ॥ ४२ ॥ बीभत्सुरपि गीतेन स्वनृत्येन च पाण्डवः । विराटं तोषयामास सर्व्वाश्चान्तःपुरस्त्रियः ॥ ४३ ॥ अश्वैर्विनीतैर्जवनैस्तत्र तत्र समागतैः । तोषयामास राजानं नकुलो नृपसत्तमम् ॥ ४४ ॥ तस्मै प्रदेयं प्रायच्छत् प्रीतो राजा धनं बहु । विनीतान् वृषभान् दृष्ट्वा सहदेवस्य चाभितः ॥ ४५ ॥ धनं ददौ बहुविधं विराटः पुरुषर्षभः ।

द्रौपदी प्रेक्ष्य तान् सर्वान् क्लिश्यमानान्महारथान् ॥ ४६ ॥ नातिप्रीतमना राजन्निःश्वासपरमाभवत् । एवं ते न्यवसंस्तत्र प्रच्छन्ना पुरुषर्षभाः । कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ॥ ४७ ॥

इति विराटपर्वणि समयपालनपर्वणि जीमूतवधे त्रयोदशोऽध्यायः समाप्तञ्च समयपालनपर्व ॥ १३ ॥

---

अथ कीचकवधपर्व ।

वैशम्पायन उवाच । वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा । महारथेषु छन्नेषु मासा दश समाययुः ॥ १ ॥ याज्ञसेनी सुदेष्णान्तु शुश्रूषन्ती विशाम्पते । अवसत् परिचारार्हा सुदुःखं जनमेजय ॥ २ ॥ तथा चरन्तीं पाञ्चालीं सुदेष्णाया निवेशने । तां देवीं तोषयामास तथा चान्तःपुरे स्त्रियः ॥ ३ ॥ तस्मिन् वर्षे गतप्राये कीचकस्तु महाबलः । सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ॥ ४ ॥ तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव । कीचकः कामयामास कामबाणप्रपीड़ितः ॥ ५ ॥ स तु कामाग्निसन्तप्तः सुदेष्णामभिगम्य वै । प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ॥ ६ ॥ नेयं मया जातु पुरेह दृष्टा राज्ञो विराटस्य निवेशने शुभा । रूपेण चोन्मादयतीव मा भृशं गन्धेन जाता मदिरेव भामिनी ॥ ७ ॥ का देवरूपा हृदयङ्गमा शुभा आचक्ष्व मे कस्य कुतोऽत्र शोभने । चित्तं हि निर्मथ्य करोति मां वशे न चान्यदत्रौषधमस्ति मे मतम् ॥ ८ ॥ अहो तवेयं परिचारिका शुभा प्रत्यग्ररूपा प्रतिभाति मामियम् । अयुक्तरूपं हि करोति कर्म ते प्रशास्तु मां यच्च ममास्ति किञ्चन ॥ ९ ॥ प्रभूतनागाश्वरथं महाधनं समृद्धियुक्तं बहुपानभोजनम् । मनोहरं काञ्चनचित्रभूषणं गृहं महच्छोभयता-

प्रियं मम ॥ १० ॥ ततः सुदेष्णामनुमन्त्र्य कीचकस्ततः समभ्येत्य नराधिपात्मजाम् । उवाच कृष्णामभिसान्त्वयंस्तदा मृगेन्द्रकन्यामिव जम्बुको वने ॥ ११ ॥

कीचक उवाच । का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने । प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ॥ १२ ॥ रूपमग्र्यं तथा कान्तिं सौकुमार्य्यमनुत्तमम् । कान्त्या विभाति वक्त्रं ते शशाङ्क इव निर्म्मलम् ॥ १३ ॥ नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभे शुभे । वाक्यन्ते चारुसर्वाङ्गि परपुष्टरुतोपमम् ॥ १४ ॥ एवंरूपा मया नारी काचिन्या महीतले । न दृष्टपूर्वा सुश्रोणि यादृशी त्वमनिन्दिते ॥ १५ ॥ लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे । ह्रीः श्रीः कीर्त्तिरथो कान्तिरासां का त्वं वरानने ॥ १६ ॥ अतीव रूपिणी किन्त्वमनङ्गाङ्गविहारिणी । अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ॥ १७ ॥ अपि चेक्षणपक्ष्माणं स्मितज्योत्स्नोपमं शुभम् । दिव्यांशुरश्मिभिर्वृत्तं दिव्यकान्तिमनोरमम् ॥ १८ ॥ निरीक्ष्य चन्द्रवक्त्रन्ते लक्ष्म्यानुपमया युतम् । कृत्स्ने जगति नेह कामस्य वशगो भवेत् ॥ १९ ॥ हारालङ्कारयोग्यौ ते शोभौ सुशोभनौ । सुजातौ सहितौ लक्ष्म्या पीनौ वृ न्तरौ ॥ २० ॥ कुट्मलाम्बुरुहाकारौ तव सुभ्रु पयोध प्रतोदाविव मा तुदतश्चारुहासिनि ॥ २१ ॥ वलि स्तनभारविनामितम् । कराग्रसम्मितं मध्यं तवेन् दृष्ट्वैव चारुजघनं सरित्पुलिनसन्निभम् मामप्याक्रामति भाविनि ॥ २३ ॥ जज्वाल रिव निर्द्दयः । त्वत्सङ्गमाभिसङ्कल्पविवृद्धो आत्मप्रदानवर्षेण सङ्गमाम्भोधरेण च । मन्मथानलम् ॥ २५ ॥ मच्चित्तोन्माद न त्वत्सङ्गमाभिनिशित. स्तीव्राः शक्ति

हृदयमिदं निर्दयवेगिताः। प्रविष्टा ह्यसितापाङ्गि प्रचण्डाश्चण्ड-
दारुणाः॥ २७ ॥ अत्युन्मादसमारम्भाः प्रीत्युन्मादकरा मम।
आत्मप्रदानसम्भोगैर्मामुद्धर्त्तुमिहार्हसि॥ २८ ॥ चित्रमाल्याम्बर-
धरा सर्वाभरणभूषिता। कामं प्रकामं सेवे त्वं मया सह विला-
सिनि॥ २९ ॥ नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्ज्जिता।
प्राप्नुं ह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि॥ ३०॥ स्वादून्यमृत-
कल्पानि पेयानि विविधानि च। पिवमाना मनोज्ञानि रममाणा
यथासुखम्॥ ३१॥ भोगोपचारान् विविधान् सौभाग्यं चाप्यनु-
त्तमम्। पानं पिव महाभागे भोगैश्चानुत्तमैः शुभे॥ ३२॥ इदं
हि रूपं प्रथमं नवं वयो निरर्थकं केवलमद्य भाविनि। अधार्य्य-
माणा स्रगिवोत्तमा शुभा न शोभसे सुन्दरि शोभना सती॥ ३३॥
त्यजामि दारान्मम ये पुरातना भवन्तु दास्यस्तव चारुहासिनि।
अहञ्च ते सुन्दरि दासवत् स्थितः सदा भविष्ये वशगो वरानने॥३४
द्रौपद्युवाच। अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे।
हीनवर्णां सैरिन्ध्रीं वीभत्सां केशकारिणीम्॥ ३५॥ पर-
स्मि भद्रन्ते न युक्तं तव साम्प्रतम्। दयिताः प्राणिनां दारा
नुचिन्तयः॥ ३६॥ परदारे न ते बुद्धिर्जातु कार्य्या कथ-
ञ्चन ह्यकार्य्याणामेतत् सत्पुरुषव्रतम्॥ ३७॥ मिथ्या-
नरः पापात्मा मोहमास्थितः। अयशः प्राप्नुयाद्घोरं
त्य॥ ३८॥

। एवमुक्तस्तु सैरिन्ध्र्या कीचकः काम-
सुदुर्बुद्धिः परदाराभिमर्षणे॥ ३९॥ दोषान्
लोकविगर्हितान्। प्रोवाचेदं सुदुर्बुद्धि-
०॥ नार्हस्येवं वरारोहे प्रत्याख्यातुं
ाविष्टं त्वत्कृते चारुहासिनि॥ ४१॥
प्रियवादिनम्। नूनं त्वमसितापाङ्गि

पश्चात्तापं करिष्यसि ॥ ४२ ॥ अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे। प्रभुर्वांशयिता चैव वीर्य्ये चाप्रतिमः क्षितौ ॥ ४३ ॥ पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह। रूपयौवनसौभाग्यै-र्भोगैश्चानुत्तमैः शुभैः ॥ ४४ ॥ सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह। भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ॥ ४५ ॥ मया दत्तमिदं राज्यं स्वामिन्यस्मिन् शुभानने। भजस्व मां वरारोहे भुङ्क्ष्व भोगाननुत्तमान् ॥ ४६ ॥ एवमुक्ता तु सा साध्वी कीचकेनाशुभं वचः। कीचकं प्रत्यवाचेदं गर्हयन्त्यस्य तद्वचः ॥ ४७ ॥

सैरिन्ध्र्युवाच। मा सूतपुत्र मुह्यस्व माद्यात्याक्षीः स्वजीवितम्। जानीहि पञ्चभिर्घोरैर्नित्यं मामभिरक्षिताम् ॥ ४८ ॥ न चाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम। ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ॥ ४९ ॥ अशक्यरूपं पुरुषैरध्वानं गन्तुमिच्छसि। यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम्। तर्त्तुमिच्छति मन्दात्मा तथा त्वं कर्त्तुमिच्छसि ॥ ५० ॥ अन्तर्महीं वा यदि वोर्द्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि। तथापि तेभ्यो न विमोक्षमर्हसि प्रमाथिनो देवसुता हि खेचराः ॥ ५१ ॥ त्वं कालरात्रीमिव कश्चिदातुरः किं मां दृढ़ प्रार्थयसेऽद्य कीचक। किं मातुरङ्के शयितो यथा शिशुश्चन्द्रं जिघृक्षुरिव मन्यसे हि माम् ॥ ५२ ॥ तेषां प्रिया प्रार्थयतो न ते भुवि गत्वा दिवं वा शरणं भविष्यति। न वर्त्तते कीचक ते दृशा शुभ या तेन सञ्जीवनमर्थयेत ॥ ५३ ॥

इति विराटपर्वणि कीचकवधपर्वणि कीचककृष्णासं... चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

लब्ध ...म च। ...व मया सार्द्ध ...रौ तवान्तिकम्।

वैशम्पायन उवाच । प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत् । अमर्यादेन कामेन घोरेणाभिपरिप्लुतः ॥ १ ॥

कीचक उवाच । यथा कैकेयि सैरिन्ध्री समेयात्तद्विधीयताम् । येनोपायेन सैरिन्ध्री भजेन्मां गजगामिनी । तां सुदेष्णे परीप्सस्व मोहात् प्राणान् प्रहासिषम् ॥ २ ॥

वैशम्पायन उवाच । तस्य सा बहुशः श्रुत्वा वाचं विलपतस्तदा । विराटमहिषी देवी कृपाञ्चक्रे मनस्विनी ॥ ३ ॥ स्वमन्त्रमभिसन्धाय तस्यार्थमनुचिन्त्य च । उद्योगञ्चैव कृष्णाया सुदेष्णा सूतमब्रवीत् ॥ ४ ॥

सुदेष्णोवाच । पर्वणि त्वं समुद्दिश्य सुरामन्नञ्च कारय । तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकम् ॥ ५ ॥ तत्र सम्प्रेषितामेना विजने निरवग्रहे । सान्त्वयेथा यथाकामं सान्त्वमाना रमेद्यदि ॥ ६ ॥

वैशम्पायन उवाच । इत्युक्तः स विनिष्क्रम्य भगिन्या वचनात्तदा । सुरामाहारयामास राजार्हां सुपरिष्कृताम् ॥ ७ ॥ भक्ष्यांश्च विविधाकारान् बहूंश्चोच्चावचांस्तदा । कारयामास कुशलैरन्नपानं च शोभनम् ॥ ८ ॥ तस्मिन् कृते तदा देवी कीचकेनोपमन्त्रिता । सुदेष्णा प्रेषयामास सैरिन्ध्रीं कीचकालयम् ॥ ९ ॥

सुदेष्णोवाच । उत्तिष्ठ गच्छ सैरिन्ध्रि कीचकस्य निवेशनम् । पानमानय कल्याणि पिपासा मां प्रबाधते ॥ १० ॥

सैरिन्ध्र्युवाच । न गच्छेयमहं तस्य राजपुत्रि निवेशनम् । ...ापि जानासि यथा स निरपत्रप ॥ ११ ॥ ...चाहमनवेश्मनि भामिनि । कामवृत्ता भविष्यामि पतीनां ...॥ १२ ॥ त्वं चैव देवि जानासि यथा स समयः ...त्या मया पूर्वं तव वेश्मनि भामिनि ॥ १३ ॥ कीच...ा, मदनदर्पितः । सोऽवमंस्यति मां दृष्ट्वा न

यास्ये तत्र शोभने ॥ १४ ॥ सन्ति बह्व्यस्तव प्रेष्या राजपुत्रि वशानुगाः । अन्या प्रेषय भद्रन्ते स हि मामवमंस्यते ॥ १५ ॥

सुदेष्णोवाच । नैवं त्वां जातु हिंस्यात्स इतः संप्रेषिता मया । इत्युक्त्वा प्रददौ पात्रं सपिधानं हिरण्मयम् ॥ १६ ॥ सा शङ्कमाना रुदती दैवं शरणमीयुषी । प्रातिष्ठत सुराहारी कीचकस्य निवेशनम् ॥ १७ ॥

सैरिन्ध्र्युवाच । यथाहमन्यं भर्त्तृभ्यो नाभिजानामि कञ्चन । तेन सत्येन मां प्राप्तां मा कुर्य्यात् कीचको वशे ॥ १८ ॥

वैशम्पायन उवाच । उपातिष्ठत सा सूर्य्यं मुहूर्त्तमबला तत । स तस्यास्तनुमध्यायाः सर्वं सूर्य्योऽवबुद्धवान् ॥ १९ ॥ अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् । तच्चैनां नाजहात्तत्र सर्वावस्थास्वनिन्दिताम् ॥ २० ॥ तां मृगीमिव संत्रस्तां दृष्ट्वा कृष्णां समीपगाम् । उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः ॥ २१ ॥

इति विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीसुराहरणे पञ्चदशोऽध्यायः ॥ १५ ॥

---

कीचक उवाच । स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम । स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियम् ॥ १ ॥ सुवर्णमालाः कम्बूश्च कुण्डले परिहाटके । नानापत्तनजे शुभ्रे मणिरत्नञ्च शोभनम् ॥ २ ॥ आहरन्तु च वस्त्राणि कौशिकान्यजिनानि च । अस्ति मे शयनं दिव्यं त्वदर्थमुपकल्पितम् । एहि तत्र मया सार्द्धं पिबस्व मधुमाधवीम् ॥ ३ ॥

द्रौपद्युवाच । अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम् । पानमाहर मे क्षिप्रं पिपासा मयि चाब्रवीत् ॥ ४ ॥

कीचक उवाच। अन्या भद्रे नयिष्यन्ति राजपुत्र्याः प्रतिश्रुतम्। इत्येनां दक्षिणे पाणौ सूतपुत्रः परामृशत ॥ ५ ॥

द्रौपद्युवाच। यथैवाहं नाभिचरे कदाचित् पतीन्महात्मैमनसापि जातु। तेनैव सत्येन वशीकृतं त्वां द्रष्टास्मि पाप परिकृष्यमाणम् ॥ ६ ॥

वैशम्पायन उवाच। स तामभिप्रेक्ष्य विशालनेत्रां जिघृक्षमाणा परिभर्त्सयन्तीम्। जग्राह तामुत्तरवस्त्रदेशे स कीचकस्तां सहसाक्षिपन्तीम ॥ ७ ॥ प्रगृह्यमाणा तु महाजवेन मुहुर्विनिश्वस्य च राजपुत्री। चिक्षेप तं गाढममृष्यमाणा प्रवेपमानातिरुषा शुभाङ्गी। तया समाक्षिप्ततनुः स पाप पपात शाखीव निकृत्तमूल ॥ ८ ॥ सा गृह्णीता विधमाना भूमावाक्षिप्य कीचकम्। सभा शरणमागच्छद्यत्र राजा युधिष्ठिर ॥ ९ ॥ तां कीचक. प्रधावन्तीं केशपाशे परामृशत्। अथैना पश्यतो राज्ञः पातयित्वा पदावधीत ॥ १० ॥ तस्या योऽसौ तदार्केण राक्षसः सन्नियोजित। स कीचकमपोवाह वातवेगेन भारत ॥ ११ ॥ स पपात तदा भूमौ रक्षोबलसमाहत। विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुम ॥ १२ ॥ ताञ्चासीनौ ददृशतुर्भीमसेनयुधिष्ठिरौ। अमृष्यमाणौ कृष्णाया. कीचकेन पराभवम् ॥ १३ ॥ तस्य भीमो वधं प्रेप्सुः कीचकस्य दुरात्मनः। दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामना ॥ १४ ॥ धूमच्छायामभजतां नेत्रे चोच्छ्रितपक्ष्मणी। सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्त्तत ॥१५॥ हस्तेन ममृदे चैव ललाटं परवीरहा। भूयश्च त्वरित क्रुद्धः सहसोत्थातुमैच्छत ॥ १६ ॥ अथावमृद्नादङ्गुष्ठमङ्गुष्ठेन युधिष्ठिरः। प्रबोधनभयाद्राजा भीमं तं प्रत्यषेधयत् ॥ १७ ॥ तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम्। स तमावारयामास भीमसेनं युधिष्ठिर ॥ १८ ॥ आलोकयसि किं वृक्षं सूद दारुकृतेन वै। यदि

ते दारुभिः कृत्यं वह्निर्व्वाग्निरवज्ञताम् ॥ १९ ॥ सा सभाद्वारमासाद्य रुदती मत्स्यमब्रवीत्। अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः ॥ २० ॥ आकारमभिरक्षन्ती प्रतिज्ञां धर्मसंहिताम्। दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ २१ ॥

द्रौपद्युवाच। येषां वैरी न स्वपिति षष्ठेऽपि विषये वसन्। तेषां मां मानिनीं भार्य्यां सूतपुत्रः पदावधीत ॥ २२ ॥ ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः। तेषां मां मानिनीं भार्य्यां सूतपुत्रः पदावधीत् ॥ २३ ॥ येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयतेऽनिशम्। तेषां मां मानिनीं भार्य्यां सूतपुत्रः पदावधीत् ॥ २४ ॥ ये च तेजस्विनो दान्ता बलवन्तोऽतिमानिनः। तेषां मां मानिनीं भार्य्यां सूतपुत्रः पदावधीत् ॥ २५ ॥ सर्वलोकमिमं हन्युर्धर्मपाशासितास्तु ये। तेषां मां मानिनीं भार्य्यां सूतपुत्रः पदावधीत् ॥ २६ ॥ शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम्। चरन्ति लोके प्रच्छन्नाः क्व नु तेऽद्य महारथाः ॥ २७ ॥ कथन्ते सूतपुत्रेण बध्यमानां प्रियां सतीम्। मर्षयन्ति यथा क्लीवा बलवन्तोऽमितौजसः ॥ २८ ॥ क्व नु तेषाममर्षश्च वीर्य्यन्तेजश्च वर्त्तते। न परीप्सन्ति ये भार्य्यां बध्यमानां दुरात्मना ॥ २९ ॥ मया तु शक्यं किङ्कर्त्तुं विराटे धर्मदूषके। यः पश्यन्मां मर्षयति बध्यमानामनागसम् ॥ ३० ॥ न राजा राजवत्किञ्चित् समाचरति कीचके। दस्यूनामिव धर्मस्ते न हि संसदि शोभते ॥ ३१ ॥ नाहमेतेन युक्ता वै हन्तुं मत्स्य तवान्तिके। सभासदश्च पश्यन्तु कीचकस्य व्यतिक्रमम् ॥ ३२ ॥ कीचको न च धर्मज्ञो न च मत्स्यः कथञ्चन। सभासदोऽप्यधर्मज्ञा य एनं पर्य्युपासते ॥ ३३ ॥

वैशम्पायन उवाच। एवंविधैर्वचोभिः सा तदा कृष्णाश्रुलोचना। उपालभत राजानं मात्स्यानां वरवर्णिनी ॥ ३४ ॥

विराट उवाच । परोक्ष नाभिजानामि विग्रहं युवयोरहम् । अर्थतत्त्वमविज्ञाय किन्नु स्यात् कौशलं मम ॥ ३५ ॥

वैशम्पायन उवाच । ततस्तु सभ्या विज्ञाय कृष्णां भूयोऽभ्यपूजयन् । साधुसाध्विति चाप्याहुः कीचकं च व्यगर्हयन् ॥ ३६ ॥

सभ्या ऊचुः । यस्येयं चारुसर्वाङ्गी भार्य्या स्यादायतेक्षणा । परो लाभस्तु तस्य स्यान्न च शोचेत् कथञ्चन ॥ ३७ ॥ न हीदृशी मनुष्येषु सुलभा वरवर्णिनी । नारी सर्वानवद्याङ्गी देवीं मन्यामहे वयम ॥ ३८ ॥

वैशम्पायन उवाच । एवं संपूजयन्तस्ते कृष्णां प्रेक्ष्य सभासदः । युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आगमत् ॥ ३९ ॥ अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् । गच्छ सैरिन्ध्रि मात्रस्थाः सुदेष्णाया निवेशनम् ॥ ४० ॥ भर्त्तारमनुरुध्यन्त्यः क्लिश्यन्ते वीरपत्नय । शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ ४१ ॥ मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव । तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्य्यवर्चसः ॥ ४२ ॥ अकालज्ञासि सैरिन्ध्रि शैलूषीव विरोदिषि । विघ्नं करोषि मत्स्यानां दीव्यतां राजसंसदि ॥ ४३ ॥ गच्छ सैरिन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् । व्यपनेष्यन्ति ते दुःखं येन ते विप्रियं कृतम् ॥ ४४ ॥

सैरिन्ध्र्युवाच । अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी । तस्य तस्यैव ते वध्या येषां ज्येष्ठोऽक्षदेविता ॥ ४५ ॥

वैशम्पायन उवाच । इत्युक्त्वा प्राद्रवत् कृष्णा सुदेष्णाया निवेशनम । केशान्मुक्त्वा च सुश्रोणी संरम्भाल्लोहितेक्षणा ॥ ४६ ॥ शुशुभे वदनं तस्या रुदन्त्या सुचिरं तदा । मेघलेखाविनिर्मुक्तं दिवीव शशिमण्डलम् ॥ ४७ ॥

सुदेष्णोवाच । कस्त्वावधीद्वरारोहे कस्माद्रोदिषि शोभने । कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतम् ॥ ४८ ॥

द्रौपद्युवाच। कीचको मावधीत्तत्र सुराहारीं गतान्तव।
सभायां पश्यतो राज्ञो यथैव विजने वने ॥ ४९ ॥

सुदेष्णोवाच। घातयामि सुकेशान्ते कीचकं यदि मन्यसे।
योऽसौ त्वां कामसम्मत्तो दुर्लभामवमन्यते ॥ ५० ॥

सैरिन्ध्य्रुवाच। अन्ये चैव वधिष्यन्ति येषामागः करोति सः।
मन्ये चैवाद्य सुव्यक्तं यमलोकं गमिष्यति ॥ ५१ ॥

इति विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीपरिभवे
षोड़शोऽध्यायः ॥ १६ ॥

---

वैशम्पायन उवाच। सा हता सूतपुत्रेण राजपत्नी यश-
स्विनी। वधं कृष्णा परीप्सन्ती सेनावाहस्य भामिनी ॥ १ ॥
जगामावासमेवाथ तदा सा द्रुपदात्मजा। कृत्वा शौचं यथान्यायं
कृष्णा सा तनुमध्यमा ॥ २ ॥ गात्राणि वाससी चैव प्रक्षाल्य सलि-
लेन सा। चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ॥ ३ ॥
किङ्करोमि क्व गच्छामि कथं कार्य्यं भवेन्मम। इत्येवं चिन्तयित्वा
सा भीमं वै मनसागमत् ॥ ४ ॥ नान्यः कर्त्ता ऋते भीमान्ममाद्य
मनसः प्रियम्। तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् ॥५॥
प्राद्रवन्नाथमिच्छन्ती कृष्णा नाथवती सती। भवनं भीमसेनस्य
क्षिप्रमायतलोचना। दुःखेन महता युक्ता मानसेन मनस्विनी ॥६॥

सैरिन्ध्य्रुवाच। तस्मिन् जीवति पापिष्ठे सेनावाहे मम
द्विषि। तत्कर्म कृतवत्यद्य कथं निद्रान्निषेवसे ॥ ७ ॥

वैशम्पायन उवाच। एवमुक्त्वाथ तां शालां प्रविवेश मन-
स्विनी। यस्यां भीमस्तथा शेते मृगराज इव श्वसन् ॥८॥ तस्या
रूपेण सा शाला भीमस्य च महात्मनः। सम्मूर्च्छितेव कौरव्य
प्रजज्वाल च तेजसा। सा वै महानसं प्राप्य भीमसेनं शुचिस्मिता

॥ ९ ॥ सर्वश्वेतेव माहेयी वने जाता त्रिहायनी। उपातिष्ठत पाञ्चाली वासितेव नरर्षभम् ॥ १० ॥ सा लतेव महाशालं फुल्लं गोमतितीरजम्। परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनम् ॥ ११ ॥ बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता। सिंहं सुप्तं वने दुर्गे मृगराजवधूरिव ॥ १२ ॥ भीमसेनमुपाश्लिष्यद्धस्तिनीव महागजम्। वीणेव मधुरालापा गान्धारं साधु मूर्च्छिता। अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता ॥ १३ ॥ उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः। नामृतस्य हि पापीयान् भार्य्यामालभ्य जीवति ॥ १४ ॥ स सम्प्रहाय शयनं राजपुत्त्रा प्रबोधितः। उपातिष्ठत मेघाभः पर्य्यङ्के सोपसंग्रहे ॥१५॥ अथाब्रवीद्राजपुत्रीं कौन्तेयो महिषीं प्रियाम्। केनास्यर्थेन संप्राप्ता त्वरितेव ममान्तिकम् ॥ १६ ॥ न ते प्रकृतिमान् वर्णः कृशा पाण्डुश्च लक्ष्यसे। आचक्ष्व परिशेषेण सर्वं विद्यामहं यथा ॥ १७ ॥ सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम्। यथावत् सर्वमाचक्ष्व श्रुत्वा ज्ञास्यामि यत् क्षमम् ॥ १८ ॥ अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु। अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः ॥ १९ ॥ शीघ्रमुक्त्वा यथाकामं यत्ते कार्य्यं विवक्षितम्। गच्छ वै शयनायैव पुरा नान्योऽवबुध्यते ॥ २० ॥

इति विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीभीमसंवादे सप्तदशोऽध्यायः ॥ १७ ॥

---

द्रौपद्युवाच। अशोच्यत्वं कुतस्तस्या यस्या भर्त्ता युधिष्ठिरः। जानन् सर्वाणि दुःखानि किं मां त्वं परिपृच्छसि ॥ १ ॥ यन्मां दासीप्रवादेन प्रातिकामी तदानयत्। सभापरिषदो मध्ये तन्मां दहति भारत ॥२॥ पार्थिवस्य सुता नाम का नु जीवति मादृशी।

अनुभूयेदृशं दुःखमन्यत्र द्रौपदीं प्रभो ॥ ३ ॥ वनवासगतायाश्च
सैन्धवेन दुरात्मना । परामर्शो द्वितीयो वै सोढ़ुमुत्सहते तु का ॥४॥
मत्स्यराज्ञः समक्षन्तु तस्य धूर्त्तस्य पश्यतः । कीचकेन पदामृष्टा
का नु जीवति मादृशी ॥ ५ ॥ एवं बहुविधैः क्लेशैः क्लिश्यमानाश्च
भारत । न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥ ६ ॥
योऽयं राज्ञो विराटस्य कीचको नाम भारत । सेनानीः पुरुष-
व्याघ्र श्यालः परमदुर्मतिः ॥ ७ ॥ स मां सैरिन्ध्रिवेशेन वसन्तीं
राजवेश्मनि । नित्यमेवाह दुष्टात्मा भार्य्या मम भवेति वै ॥ ८ ॥
तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन् । कालेनेव फलं पक्वं
हृदयं मे विदीर्य्यते ॥ ९ ॥ भ्रातरञ्च विगर्हस्व ज्येष्ठं दुर्द्यूत-
देविनम् । यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥ १० ॥
को हि राज्य परित्यज्य सर्वस्व चात्मना सह । प्रव्रज्यायैव
दीव्येत विना दुर्द्यूतदेविनम् ॥ ११ ॥ यदि निष्कसहस्रेण यच्चा-
न्यत्सारवद्धनम् । सायं प्रातरदेविष्यदपि सम्वत्सरान् बहून् ॥१२॥
रुक्म हिरण्यं वासांसि यानं युग्यमजाविकम् । अश्वाश्वतर-
सङ्घाश्च न जातुक्षयमावहेत् ॥ १३ ॥ सोऽय द्यूतप्रवादेन श्रिया
प्रत्यवरोपित । तूष्णीमास्ते यथा मूढ़ः स्वानि कर्माणि चिन्तयन्
॥ १४ ॥ दशनागसहस्राणि हयाना हेममालिनाम् । य यान्त
मनुयान्तीह सोऽयं द्यूतेन जीवति ॥ १५ ॥ रथाः शतसहस्राणि
नृपाणाममितौजसाम् । उपासन्त महाराजमिन्द्रप्रस्थे युधिष्ठिरम्
॥ १६ ॥ शतं दासीसहस्राणां यस्य नित्यं महानसे । पात्री-
हस्तं दिवारात्रमतिथीन् भोजयत्युत ॥ १७ ॥ एष निष्कसह-
स्राणि प्रदाय ददतांवरः । द्यूतजेन ह्यनर्थेन महता समुपा-
श्रितः ॥ १८ ॥ एनं हि स्वरसम्पन्ना बहवः सूतमागधाः । साय-
प्रातरुपातिष्ठन् सुमृष्टमणिकुण्डलाः ॥ १९ ॥ सहस्रमृषयो यस्य
नित्यमासन् सभासदः । तपःश्रुतोपसम्पन्नाः सर्वकामैरुपस्थिताः

॥ २० ॥ अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः। त्रिंश-
द्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः ॥ २१ ॥ अप्रतिग्राहिणा-
ञ्चैव यतीनामूर्द्ध्वरेतसाम् दश चापि सहस्राणि सोऽयमास्ते
नरेश्वरः ॥ २२ ॥ आनृशंस्यमनुक्रोशः संविभागस्तथैव च । यस्मि-
न्नेतानि सर्वाणि ।मास्ते नरेश्वरः ॥२३॥ अन्धान् वृद्धांस्तथा-
नाथान् वालान् राष्ट्रेषु दुर्गतान् । बिभर्त्ति विविधान्राजा धृति-
मान् सत्यविक्रमः ॥ २४ ॥ सम्विभागमना नित्यमानृशंस्याद्युधि-
ष्ठिरः । स एष निरयं प्राप्तो मत्स्यस्य परिचारकः ॥ २५ ॥
सभायां देविता राज्ञः कङ्को ब्रूते युधिष्ठिरः । इन्द्रप्रस्थे निवसतः
समयी यस्य पार्थिवाः ॥ २६ ॥ आसन् वलिभृतः सर्वे सोऽद्यान्यै-
र्भृतिमिच्छति । पार्थिवाः पृथिवीपाला यस्यासन्वशवर्त्तिन. ॥२७॥
स्ववशे विवशो राजा परेषामद्य वर्त्तते । प्रताप्य पृथिवीं सर्वां
रश्मिवानिव तेजसा ॥ २८ ॥ सोऽयं राज्ञो विराटस्य सभास्तारो
युधिष्ठिरः । यमुपासन्त राजानः सभायामृषिभिः सह ॥ २९ ॥
तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवम् । सदस्यं समुपासीनं
परस्य प्रियवादिनम् ॥ ३० ॥ दृष्ट्वा युधिष्ठिरं कोपो वर्द्धते माम-
संशयम् । अतदर्हं महाप्राज्ञं जीवितार्थेऽभिसंस्थितम् ॥ ३१ ॥
दृष्ट्वा कस्य न दुःखं स्याद्धर्मात्मानं युधिष्ठिरम् । उपास्ते स्म
सभाया यं कृत्स्ना वीरा वसुन्धरा ॥ ३२ ॥ तमुपासीनमप्यन्य पश्य
भारत भारतम् । एवं बहुविधैर्दुःखैः पीडयमानामनाथवत् ।
शोकसागरमध्यस्थां किं मां भीम न पश्यसि ॥ ३३ ॥

इति विराटपर्वणि कीचकवधपर्वणि द्रौपदीभीमसंवादे
अष्टादशोऽध्यायः ॥ १८ ॥

---

द्रौपद्युवाच । इदन्तु मे महद्दुःखं यत् प्रवक्ष्यामि भारत । न मेऽभ्यसूया कर्त्तव्या दुःखादेतद्ब्रवीम्यहम् ॥ १ ॥ सूदकर्म्मणि हीने त्वमसमे भरतर्षभ । ब्रुवन् बल्लवजातीयः कस्य शोकं न वर्द्धयेः ॥ २ ॥ सूपकारं विराटस्य बल्लवं त्वां विदुर्जनाः । प्रेष्यत्वं समनुप्राप्तस्ततो दुःखतरं नु किम् ॥ ३ ॥ यदा महानसे सिद्धे विराटमुपतिष्ठसि । ब्रुवाणो बल्लवः सूदस्तदा सीदति मे मनः ॥ ४ ॥ यदा प्रहृष्टः सम्राट् त्वां योधयति कुञ्जरैः । हसन्त्यन्तःपुरे नार्य्यो मम तूद्विजते मनः ॥ ५ ॥ शार्दूलैर्महिषैः सिंहैरागारे योध्यसे यदा । कैकेय्याः प्रेक्षमाणायास्तदा मे कश्मलो भवेत् ॥ ६ ॥ तत उत्थाय कैकेयी सर्व्वास्ताः प्रत्यभाषत । प्रेष्याः समुत्थिताश्चापि कैकेयीन्ताः स्त्रियोऽब्रुवन् ॥ ७ ॥ प्रेक्ष्य मामनवद्याङ्गीं कश्मलोपहतामिव । स्नेहात् संवासजान्मन्ये सूदमेषा शुचिस्मिता ॥ ८ ॥ योध्यमानं महावीर्य्यैरिमं समनुशोचति । कल्याणरूपा सैरिन्ध्री बल्लवश्चापि सुन्दरः ॥ ९ ॥ स्त्रीणां चित्तं च दुर्ज्ञेयं युक्तरूपौ च मे मतौ । सैरिन्ध्री प्रियसंवासान्नित्यं करुणवादिनी ॥ १० ॥ अस्मिन् राजकुले चोभौ तुल्यकालनिवासिनौ । इति ब्रुवाणा वाक्यानि सा मां नित्यमतर्ज्जयत् ॥ ११ ॥ क्रुध्यन्तीं माञ्च सम्प्रेक्ष्य समशङ्कत मां त्वयि । तस्यां तथा ब्रुवन्त्यान्तु दुःखं मां महदाविशत् ॥ १२ ॥ त्वय्येवं निरयम्प्राप्ते भीमे भीमपराक्रमे । शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ॥१३॥ यः सदेवान्मनुष्यांश्च सर्व्वानेकरथोऽजयत् । सोऽयं राज्ञो विराटस्य कन्यानां नर्त्तको युवा ॥ १४ ॥ योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम् । सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ १५ ॥ यस्माद्भयममित्राणां सदैव पुरुषर्षभात् । स लोकपरिभूतेन वेशेणास्ते धनञ्जयः ॥ १६ ॥ यस्य ज्याक्षेपकठिनौ बाहू परिघसन्निभौ । स शङ्खपरिपूर्णाभ्यां शोचन्नास्ते धनञ्जयः ॥ १७ ॥

यस्य ज्यातलनिर्घोषात् समकम्पन्त शत्रवः। स्त्रियो गीतस्वनन्तस्य मुदिताः पर्य्युपासते ॥ १८ ॥ किरीटं सूर्य्यसङ्काशं यस्य मूर्द्धन्यशोभत। वेणीविकृतकेशान्तः सोऽयमद्य धनञ्जयः ॥ १९ ॥ तं वेणीकृतकेशान्तं भीमधन्वानमर्जुनम्। कन्यापरिवृतं दृष्ट्वा भीम सीदति मे मनः ॥ २० ॥ यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि। आधारः सर्वविद्यानां स धारयति कुण्डले ॥ २१ ॥ यस्य राजसहस्राणि तेजसाप्रतिमानि वै। समरे नाभ्यवर्त्तन्त वेलामिव महार्णवः ॥ २२ ॥ सोऽयं राज्ञो विराटस्य कन्यानां नर्त्तको युवा। आस्ते वेशप्रतिच्छन्नः कन्यानां परिचारकः ॥२३॥ यस्य स्म रथघोषेण समकम्पत मेदिनी। सपर्वतवना भीमा सहस्थावरजङ्गमा ॥ २४ ॥ यस्मिन् जाते महाभागे कुन्त्याः शोको व्यनश्यत। स शोचयति मामद्य भीमसेन तवानुजः ॥ २५ ॥ भूषितं तमलङ्कारैः कुण्डलैः परिहाटकैः। कम्बुपाणिनमायान्तं दृष्ट्वा सीदति मे मनः ॥ २६ ॥ यस्य नास्ति समो वीर्य्ये कश्चिदुर्व्व्यांस्त्वनुर्द्धरः। सोऽद्य कन्यापरिवृतो गायन्नास्ते धनञ्जयः ॥२७॥ धर्म्मे शौर्य्ये च सत्ये च जीवलोकस्य सम्मतम्। स्त्रीवेशविकृतं पार्थं दृष्ट्वा सीदति मे मनः ॥ २८ ॥ यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम्। प्रभिन्नमिव मातङ्गं परिकीर्णं करेणुभिः ॥ २९ ॥ मत्स्यमर्थपतिं पार्थं विराट समुपस्थितम्। पश्यामि तूर्य्यमध्यस्थं दिशो नश्यन्ति मे तदा ॥ ३० ॥ नूनमार्य्या न जानाति कृच्छ्रं प्राप्तं धनञ्जयम्। अजातशत्रुं कौरव्यं मग्नं दुर्य्यूतदेविनम् ॥३१॥ तथा दृष्ट्वा यवीयांसं सहदेवं गवाम्पतिम्। गोषु गोवेशमायान्तं पाण्डुभूतास्मि भारत ॥ ३२ ॥ सहदेवस्य वृत्तानि चिन्तयन्ती पुनः पुनः। न निद्रामभिगच्छामि भीमसेन कुतो रतिम ॥ ३३ ॥ न विन्दामि महाबाहो सहदेवस्य दुष्कृतम्। यस्मिन्नेवंविधं दुःखं प्राप्नुयात् सत्यविक्रमः ॥ ३४ ॥ दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरः

श्रियम्। गोषु गोवृषसङ्काशं मत्स्येनाभिनिवेशितम् ॥ ३५ ॥
संरब्धं रक्तनेपथ्यं गोपालानां पुरोगमम्। विराटमभिनन्दन्तमथ
मे भवति ज्वरः ॥ ३६ ॥ सहदेवं हि मे वीरं नित्यमार्य्या प्रशं-
सति। महाभिजनसम्पन्नः शीलवान् वृत्तवानिति ॥ ३७ ॥ ह्री-
निषेवो मधुरवाक् धार्म्मिकश्च प्रियश्च मे। स तेऽरण्येषु वोढ़व्यो
याज्ञसेनि क्षपास्वपि ॥ ३८ ॥ सुकुमारश्च शूरश्च राजानं चाप्यनु-
व्रतः। ज्येष्ठापचायिनं वीरं स्वयं पाञ्चालि भोजयेः ॥ ३९ ॥
इत्युवाच हि मां कुन्ती रुदती पुत्रगृद्धिनी। प्रव्रजन्तं महारण्यं
तं परिष्वज्य तिष्ठती ॥ ४० ॥ तं दृष्ट्वा व्यापृतङ्गोषु वत्सचर्म्मक्षपा-
शयम्। सहदेवं युधां श्रेष्ठं किन्नु जीवामि पाण्डव ॥ ४१ ॥
यस्त्रिभिर्न्नित्यसम्पन्नो रूपेणास्त्रेण मेधया। सोऽश्वबन्धो विरा-
टस्य पश्य कालस्य पर्य्ययम् ॥ ४२ ॥ अभ्यकीर्य्यन्त वृन्दानि दाम-
ग्रन्थिमुदीक्ष्य तम्। विनयन्तञ्जवेनाश्वान् महाराजस्य पश्यतः॥४३
अपश्यमेनं श्रीमन्तं मत्स्यं भ्राजिष्णुमुत्तमम्। विराटमुपतिष्ठन्तं
दर्शयन्तञ्च वाजिनः ॥ ४४ ॥ किन्नु मां मन्यसे पार्थ सुखिनीति
परन्तप। एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ॥ ४५ ॥ अतः
प्रतिविशिष्टानि दुःखान्यन्यानि भारत। वर्त्तन्ते मयि कौन्तेय
वक्ष्यामि शृणु तान्यपि ॥ ४६ ॥ युष्मासु ध्रियमाणेषु दुःखानि
विविधान्युत। शोषयन्ति शरीरं मे किं नु दुःखमतः परम् ॥४७॥

इति विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीभीमसंवादे
एकोनविंशोऽध्यायः ॥ १९ ॥

---

द्रौपद्युवाच। अहं सैरिन्ध्रिवेशेन चरन्ती राजवेश्मनि।
शौचदास्मि सुदेष्णाया अक्षधूर्त्तस्य कारणात् ॥ १ ॥ विक्रियां
पश्य मे तीव्रां राजपुत्र्याः परन्तप। आसकालमुदीक्षन्ती सर्व्वं

दुःखं किलान्तवत् ॥ २ ॥ अनित्या किल मर्त्यानामर्थसिद्धिर्जयाजयौ। इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ३ ॥ चक्रवत् परिवर्त्तन्ते ह्यर्थाश्च व्यसनानि च । इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ४ ॥ य एव हेतुर्भवति पुरुषस्य जयावहः । पराजये च हेतुश्च स इति प्रतिपालये ॥ ५ ॥ किं मां न प्रतिजानीषे भीमसेन हृतामिव । दत्त्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरैः ॥ ६ ॥ पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम् । न दैवस्यातिभारोऽस्ति न चैवास्यातिवर्त्तनम् ॥ ७ ॥ इति चाप्यागमं भूयो दैवस्य प्रतिपालये । स्थितं पूर्वं जलं यत्र पुनस्तत्रैव गच्छति ॥ ८ ॥ इति पर्य्यायमिच्छन्ती प्रतीक्षे उदयं पुनः । दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते ॥ ९ ॥ दैवस्य चागमे यत्नस्तेन कार्य्यो विजानता । यत्तु मे वचनस्यास्य कथितस्य प्रयोजनम्॥१०॥ पृच्छ मां दुःखिता तत्त्वं पृष्टा चापि ब्रवीमि ते । महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ॥ ११ ॥ इमामवस्थां सम्प्राप्ता मदन्या का जिजीविषेत् । कुरून् परिभवेत् सर्वान् पाञ्चालानपि भारत ॥ १२ ॥ पाण्डवेयांश्च सम्प्राप्तं मम क्लेशं ह्यरिन्दम । भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परिवारिता ॥ १३ ॥ एवं समुदिता नारी कात्वन्या दुःखिता भवेत् । नूनं हि बालया धातुर्मया वै विप्रियं कृतम् ॥ १४ ॥ यस्य प्रसादाद्दुर्नीतं प्राप्तास्मि भरतर्षभ । वर्णावकाशमपि मे पश्य पाण्डव तादृशम् ॥ १५ ॥ यादृशो मे न तत्रासीत् दुःखे परमके तदा । त्वमेव भीम जानासि यन्मे पार्थ सुखं पुरा ॥ १६ ॥ साहं दासत्वमापन्ना न शान्तिमवशा लभे । नादैविकमहं मन्ये यत्र पार्थो धनञ्जयः ॥ १७ ॥ भीमधन्वा महाबाहुरास्ते छन्न इवानलः । अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ॥ १८ ॥ विनिपातमिमं मन्ये युष्माकं ह्यविचिन्तितम् । यस्या मम मुखप्रेक्षा यूयमिन्द्रसमाः सदा ॥ १९ ॥ सा

प्रेष्ये सुखमन्यासामपराणां वरा सती । पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ॥ २० ॥ युष्मासु ध्रियमाणेषु पश्य कालस्य पर्य्ययम् । यस्याः सागरपर्य्यन्ता पृथिवी वशवर्त्तिनी ॥ २१ । आसीत्साद्य सुदेष्णाया भीताहं वशवर्त्तिनी । यस्याः पुरःसरा आसन् पृष्ठतश्चानुगामिनः ॥ २२ ॥ साहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी । इदन्तु दुःखं कौन्तेय ममासह्यं निबोध तत् ॥ २३ ॥ या न जातु स्वयं पिंषे गात्रोद्वर्त्तनमात्मनः । अन्यत्र कुन्त्या भद्रन्ते सा पिनष्म्यद्य चन्दनम् ॥ २४ ॥ पश्य कौन्तेय पाणी मे नैवाभूतां हि यौ पुरा । इत्यस्य दर्शयामास किणवन्तौ करावुभौ ॥ २५ ॥ बिभेमि कुन्त्या या नाहं युष्माकं वा कदाचन । साद्याग्रतो विराटस्य भीता तिष्ठामि किङ्करी ॥ २६ ॥ किं नु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा । नान्यपिष्टं हि मत्स्यस्य चन्दनं किल रोचते ॥ २७ ॥

वैशम्पायन उवाच । सा कीर्त्तयन्ती दुःखानि भीमसेनस्य भामिनी । रुरोद शनकैः कृष्णा भीमसेनमुदीक्षती ॥ २८ ॥ सा वाष्पकलया वाचा निःश्वसन्ती पुनः पुनः । हृदयं भीमसेनस्य घटयन्तीदमब्रवीत् ॥ २९ ॥

द्रौपद्युवाच । नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा । अभाग्या यत्र जीवामि मर्त्तव्ये सति पाण्डव ॥ ३० ॥

वैशम्पायन उवाच । ततस्तस्याः करौ सूक्ष्मौ किणवन्तौ वृकोदरः । मुखमानीय वै पत्न्या रुरोद परवीरहा ॥ ३१ ॥ तौ गृहीत्वा च कौन्तेयो वाष्पमुत्सृज्य वीर्य्यवान् । ततः परमदुःखार्त्त इदं वचनमब्रवीत ॥ ३२ ॥

इति विराटपर्वणि कीचकवधपर्वणि द्रौपदीभीमसंवादे विंशोऽध्यायः ॥ २० ॥

---

भीमसेन उवाच । धिगस्तु मे बाहुबलं गाण्डीवं फाल्गुनस्य च । यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणाविमौ ॥ १ ॥ सभायान्तु विराटस्य करोमि कदनं महत् । तत्र मे कारणं भाति कौन्तेयो यत् प्रतीक्षते ॥ २ ॥ अथ वा कीचकस्याहं पोथयामि पदा शिरः । ऐश्वर्य्यमदमत्तस्य क्रीड़न्निव महाद्विपः ॥ ३ ॥ अपश्यन्त्वां यदा कृष्णे कीचकेन पदाहताम् । तदैवाहं चिकीर्षामि मत्स्यानां कदनं महत ॥ ४ ॥ तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् । तदहन्तस्य विज्ञाय स्थित एवास्मि भामिनि ॥ ५ ॥ यच्च राष्ट्रात् प्रच्यवनं कुरूणामवधश्च यः । सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ॥ ६ ॥ दुःशासनस्य पापस्य यन्मया न हृतं शिरः । तन्मे दहति गात्राणि हृदि शल्यमिवार्पितम् ॥ ७ ॥ मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते । इदन्तु समुपालम्भ त्वत्तो राजा युधिष्ठिर ॥ ८ ॥ शृणुयाद्यापि कल्याणि कृत्स्नं जह्यात् स जीवितम् । धनञ्जयो वा सुश्रोणि यमौ वा तनुमध्यमे ॥९॥ लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम् । पुरा सुकन्या भार्य्या च भार्गवं च्यवनं वने ॥१०॥ वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी । नारायणी चेन्द्रसेना रूपेण यदि ते श्रुता ॥११॥ पतिमन्वचरद्वृद्ध पुरा वर्षसहस्रिणम् । दुहिता जनकस्यापि वैदेही यदि ते श्रुता ॥ १२ ॥ पतिमन्वचरत्सीता महारण्यनिवासिनम् । रक्षसा निग्रहं प्राप्य रामस्य महिषी प्रिया ॥ १३ ॥ क्लिश्यमानापि सुश्रोणी राममेवान्वपद्यत । लोपामुद्रा तथा भीरु वयोरूपसमन्विता ॥ १४ ॥ अगस्त्यमन्वयाद्धित्वा कामान् सर्वानमानुषान् । द्युमत्सेनसुतं वीर सत्यवन्तमनिन्दिता ॥१५॥ सावित्र्यनुचचारैका यमलोकं मनस्विनी । यथैताः कीर्त्तिता नार्य्यो रूपवत्यः पतिव्रताः ॥ १६ ॥ तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः । सा दीर्घं क्षम कालन्त्वं मासमर्द्धसम्मितम् । पूर्णे त्रयोदशे वर्षे राज्ञां राज्ञी भविष्यसि ॥ १७ ॥

द्रौपद्युवाच । आर्त्तयैतन्मया भीम कृतं वाष्पप्रमोचनम् । अपारयन्त्या दुःखानि न राजानमुपालभे ॥ १८ ॥ किमुक्तेन व्यतीतेन भीमसेन महाबल । प्रत्युपस्थितकालस्य कार्य्यस्यानन्तरो भव ॥ १९ ॥ ममेह भीम कैकेयी रूपाभिभवशङ्कया । नित्य-मुद्विजते राजा कथं नेयादिमामिति ॥ २० ॥ तस्या विदित्वा तं भावं स्वयं चानृतदर्शन । कीचकोऽयं तु दुष्टात्मा सदा प्रार्थयते हि माम् ॥ २१ ॥ तमहं कुपिता भीम पुनः कोपं नियम्य च । अब्रुवं कामसंमूढ़मात्मानं रक्ष कीचक ॥ २२ ॥ गन्धर्व्वाणामहं भार्य्या पञ्चाना महिषी प्रिया । ते त्वां निहन्युः कुपिताः शूराः साहसकारिणः ॥ २३ ॥ एवमुक्तः सुदुष्टात्मा कीचकः प्रत्युवाच ह । नाहं बिभेमि सैरिन्ध्रि गन्धर्व्वाणां शुचिस्मिते ॥ २४ ॥ शतं शतसहस्राणि गन्धर्व्वाणामहं रणे । समागतं हनिष्यामि त्वम्भीरु कुरु मे क्षणम् ॥ २५ ॥ इत्युक्ते चाब्रुवं मत्तं कामातुरमहं पुनः । न त्वम्प्रतिबलश्चैषां गन्धर्व्वाणां यशस्विनाम् ॥ २६ ॥ धर्म्मे स्थितास्मि सततं कुलशीलसमन्विता । नेच्छामि कश्चिद्वध्यन्तं तेन जीवसि कीचक ॥ २७ ॥ एवमुक्तः स दुष्टात्मा प्राहसत् स्वनवत्तदा । अथ मा तत्र कैकेयी प्रैषयत् प्रणयेन तु ॥ २८ ॥ तेनैव देशिता पूर्व्वं भ्रातृप्रियचिकीर्षया । सुरामानय कल्याणि कीचकस्य निवेशनात् ॥ २९ ॥ सूतपुत्रस्तु मा दृष्ट्वा महत् सान्त्वमवर्त्तयत् । सान्त्वे प्रतिहते क्रुद्धः परामर्षमनाभवत् ॥ ३० ॥ विदित्वा तस्य सङ्कल्पं कीचकस्य दुरात्मनः । तथाहं राजशरणं जवेनैव प्रधाविता ॥ ३१ ॥ सन्दर्शने तु मां राज्ञः सूतपुत्रः परामृषत् । पातयित्वा तु दुष्टात्मा पदाहन्तेन ताड़िता ॥ ३२ ॥ प्रेक्षते स्म विराटस्तु कङ्कस्तु वहवो जनाः । रथिनः पीठमर्द्दाश्च हस्त्यारोहाश्च नैगमाः ॥ ३३ ॥ उपालब्धो मया राजा कङ्कश्चापि पुनः पुनः । ततो न वारितो राज्ञा न तस्य विनयः कृतः ॥ ३४ ॥ योऽयं राज्ञो विराटस्य कीचको

नाम सारथिः। त्यक्तधर्मा नृशंसश्च नरस्त्रीसम्मतः प्रियः ॥३५॥
शूरोऽभिमानी पापात्मा सर्व्वार्थेषु च मुग्धवान्। दारामर्षी महा-
भाग लभतेऽर्थान् बहूनपि ॥ ३६ ॥ आहरेदपि वित्तानि परेषां
क्रोशतामपि। न तिष्ठति स्म सन्मार्गे न च धर्म्मं बुभूषति ॥ ३७ ॥
पापात्मा पापभावश्च कामबाणवशानुगः। अविनीतश्च दुष्टात्मा
प्रत्याख्यातः पुनः पुनः ॥ ३८ ॥ दर्शने दर्शने हन्याद्यदि जह्यां च
जीवितम्। तद्धर्म्मे यतमानानां महान् धर्म्मो नशिष्यति ॥ ३९ ॥
समयं रक्षमाणानां भार्य्या वो न भविष्यति। भार्य्यायां रक्ष्य-
माणायां प्रजा भवति रक्षिता ॥ ४० ॥ प्रजायां रक्ष्यमाणाया-
मात्मा भवति रक्षितः। आत्मा हि जायते तस्यां तेन जायां
विदुर्बुधाः ॥ ४१ ॥ भर्त्ता तु भार्य्यया रक्ष्यः कथञ्जायान्ममोदरे।
वदतां वर्णधर्म्मांश्च ब्राह्मणानामिति श्रुतम् ॥ ४२ ॥ क्षत्रियस्य
सदा धर्म्मो नान्यः शत्रुनिबर्हणात्। पश्यतो धर्म्मराजस्य कीचको
माम्पदावधीत् ॥ ४३ ॥ तव चैव समक्षं वै भीमसेन महाबल।
त्वया ह्यहं परित्राता तस्माद्घोराज्जटासुरात् ॥ ४४ ॥ जयद्रथ-
स्तथैव त्वमजैषीर्भ्रातृभिः सह। जहीममपि पापिष्ठं योऽयं मामव-
मन्यते ॥ ४५ ॥ कीचको राजवाल्लभ्याच्छोककृन्मम भारत। तमेवं
कामसम्मत्तं भिन्धि कुम्भमिवाश्मनि ॥ ४६ ॥ यो निमित्तमनर्थानां
बहूनां मम भारत। तञ्चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ॥४७
विषमालोड्य पास्यामि मा कीचकवशङ्गमम्। श्रेयो हि मरणं
मह्यम्भीमसेन तवाग्रतः ॥ ४८ ॥

वैशम्पायन उवाच। इत्युक्त्वा प्रारुदत् कृष्णा भीमस्योरः-
समाश्रिता। भीमश्च ताम्परिष्वज्य महत् सान्त्वं प्रयुज्य च
॥ ४९ ॥ आश्वासयित्वा बहुशो भृशमार्त्तां सुमध्यमाम्। हेतु-
तत्त्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ॥ ५० ॥ प्रमृज्य वदनं
तस्याः पाणिनाश्रुसमाकुलम्। कीचकं मनसागच्छत् सृक्किणी

परिसंक्लिश्य । उवाच चैनां दुःखार्त्तां भीमः क्रोधसमन्वितः ॥ ५१ ॥

इति विराटपर्वणि कीचकवधपर्वणि द्रौपदीसान्त्वने
एकविंशोऽध्यायः ॥ २१ ॥

---

भीमसेन उवाच । तथा भद्रे करिष्यामि यथा त्वम्भीरु भाषसे ।
अद्य तं सूदयिष्यामि कीचकं सहबान्धवम् ॥ १ ॥ अस्याः प्रदोषे
शर्व्वर्य्याः कुरुष्वानेन सङ्गतम् । दुःखं शोकञ्च निर्द्धूय याज्ञसेनि
शुचिस्मिते ॥ २ ॥ येषा नर्त्तनशालेह मत्स्यराजेन कारिता ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥ ३ ॥ तत्रास्ति
शयनं दिव्यं दृढाङ्गं सुप्रतिष्ठितम् । तत्रास्य दर्शयिष्यामि पूर्व्व-
प्रेतान् पितामहान् ॥ ४ ॥ यथा च त्वा न पश्येयु कुर्व्वाणा तेन
संविदम् । कुर्य्यास्तथा त्व कल्याणि यथा सन्निहितो भवेत् ॥ ५ ॥
वैशम्पायन उवाच । तथा तौ कथयित्वा तु वाष्पमुत्सृज्य
दुःखितौ । रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि ॥ ६ ॥ तस्यां
रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः । गत्वा राजकुलायैव
द्रौपदीमिदमब्रवीत् ॥ ७ ॥ सभायां पश्यतो राज्ञः पातयित्वा
पदाहनम् । न चैवालभसे त्राणमभिपन्ना बलीयसा ॥ ८ ॥ प्रवा-
देनेह मत्स्यानां राजा नाम्नायमुच्यते । अहमेव हि मत्स्यानां
राजा वै वाहिनीपतिः ॥ ९ ॥ मां सुखं प्रतिपद्यस्व दासो भीरु
भवामि ते । अह्नाय तव सुश्रोणि शतं निष्कं ददाम्यहम् ॥ १० ॥
दासीशतञ्च ते दद्यां दासानामपि चापरम् । रथं चाश्वतरीयुक्त-
मस्तु नौ भीरु सङ्गम ॥ ११ ॥
द्रौपद्युवाच । एवं मे समयं त्वद्य प्रतिपद्यस्व कीचक ।
न सखा वा भ्राता वा जानीयात्सङ्गमं मया ॥ १२ ॥ अनुप्रश्ना-

न्नाद्धीतास्मि गन्धर्वाणां यशस्विनाम् । एवं मे प्रतिजानीहि ततो ऽहं वशगा तव ॥ १३ ॥

कीचक उवाच । एवमेतत् करिष्यामि यथा सुश्रोणि भाषसे । एको भद्रे गमिष्यामि शून्यमावसथं तव ॥ १४ ॥ समागमार्थं रम्भोरु त्वया मदनमोहितः । यथा त्वां नैव पश्येयुर्गन्धर्वाः सूर्य्यवर्च्चसः ॥ १५ ॥

द्रौपद्युवाच । यदेतन्नर्त्तनागारं मत्स्यराजेन कारितम् । दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥ १६ ॥ तमिस्रे तत्र गच्छेथा गन्धर्वास्तन्न जानते । तत्र दोषः परिहृतो भविष्यति न संशयः ॥ १७ ॥

वैशम्पायन उवाच । तमर्थमभिजल्पन्त्याः कृष्णायाः कीचकेन ह । दिवसार्द्धं समभवन्मासेनैव समं नृप ॥ १८ ॥ ततः सा भीमसेनस्य तमर्थं प्रत्यवेदयत् । कीचको ऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ॥ १९ ॥ सैरिन्ध्रीरूपिणं मूढो मृत्युं तन्नावबुद्धवान् । गन्धाभरणमाल्येषु व्यासक्तः स विशेषतः ॥ २० ॥ अलञ्चक्रे तदात्मानं सत्वरं काममोहितः । तस्य तत् कुर्वतः कर्म्म कालो दीर्घ इवाभवत् ॥ २१ ॥ अनुचिन्तयतश्चापि तामेवायतलोचनाम् । आसीदभ्यधिका चापि श्रीः श्रियं प्रमुमुक्षतः ॥ २२ ॥ निर्वाणकाले दीपस्य वर्त्तीमिव दिधक्षतः । कृतसम्प्रत्ययस्तस्याः कीचकः काममोहितः ॥ २३ ॥ नाजानाद्दिवसं यान्तं चिन्तयानः समागमम् । ततस्तु द्रौपदी गत्वा तदा भीमं महानसे ॥ २४ ॥ उपातिष्ठत कल्याणी कौरव्य पतिमन्तिकम् । तमुवाच सुकेशान्ता कीचकस्य मया कृतः ॥ २५ ॥ सङ्गमो नर्त्तनागारे यथावोचः परन्तप । शून्यं स नर्त्तनागारमागमिष्यति कीचकः ॥ २६ ॥ एको निशि महाबाहो कीचकं तं निसूदय । तं सूतपुत्रं कौन्तेय कीचकं मददर्पितम् ॥ २७ ॥ गत्वा त्वं नर्त्तनागारं निर्जीवं कुरु पाण्डव ।

दर्पाच्च सूतपुत्रोऽसौ गन्धर्व्वानवमन्यते ॥ २८ ॥ तं त्वं प्रहरतां श्रेष्ठ कृष्णानागमिवोद्धर । अश्रुदुःखाभिभूताया मम मार्जस्व भारत । आत्मनश्चैव भद्रन्ते कुरु मानं कुलस्य च ॥ २९ ॥

भीमसेन उवाच । एवं करोम्यहं भद्रे यथा त्वं भीरु भाषसे । स्वागतं ते वरारोहे यन्मां वेदयसे प्रियम् ॥ ३० ॥ न ह्यन्यं कञ्चिदिच्छामि सहायं वरवर्णिनि । या मे प्रीतिस्त्वयाख्याता कीचकस्य समागमे ॥ ३१ ॥ हत्वा हिडिम्बं सा प्रीतिर्ममासीद्वर-वर्णिनि । सत्यं भ्रातॄंश्च धर्मञ्च पुरस्कृत्य ब्रवीमि ते ॥ ३२ ॥ कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा । तं गह्वरे प्रकाशे वा पोथयिष्यामि कीचकम् ॥ ३३ ॥ अथ चेदपि योत्स्यन्ति हिंस्ये मत्स्यानपि ध्रुवम् । ततो दुर्य्योधनं हत्वा प्रतिपत्स्ये वसुन्धराम् । कामं मत्स्यमुपास्तां हि कुन्तीपुत्रो युधिष्ठिरः ॥ ३४ ॥

द्रौपद्युवाच । यथा न संत्यजेथास्त्वं सत्यं वै मत्कृते विभो । निगूढ़स्त्वं तथा पार्थ कीचकं तं निसूदय ॥ ३५ ॥

भीमसेन उवाच । एवमेतत् करिष्यामि यथा त्वं भीरु भाषसे । अद्य तं सूदयिष्यामि कीचकं सह बान्धवैः ॥ ३६ ॥ अदृश्यमान-स्तस्याद्य तमस्विन्यामनिन्दिते । नागो विल्वमिवाक्रम्य पोथयि-ष्याम्यहं शिरः । अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मन. ॥३७॥

वैशम्पायन उवाच । भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपा-विशत् । मृगं हरिरिवादृश्यः प्रत्याकाङ्क्षत कीचकम् ॥ ३८ ॥ कीचकश्चाप्यलङ्कृत्य यथाकाममुपागमत् । तां वेलां नर्त्तनागारं पाञ्चालीसङ्गमाशया ॥ ३९ ॥ मन्यमानः स सङ्केतमागारं प्राविश-त्ततः । प्रविश्य च स तद्वेश्म तमसा संवृतं महत् ॥ ४० ॥ पूर्वा-गतं गतस्तत्र भीममप्रतिमौजसम् । एकान्तावस्थित चैनमाससाद सुदुर्मतिः ॥ ४१ ॥ शयानं शयने तत्र सूतपुत्रः परामृशत् । जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन ह ॥ ४२ ॥ उपसङ्गम्य

चैवैनं कीचकः काममोहितः । हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ॥ ४३ ॥ प्रापितन्ते मया वित्तं बहुरूपमनन्तकम् । त्वत्कृते धनरत्नाढ्यं दासीशतपरिच्छदम् ॥ ४४ ॥ रूपलावण्ययुक्ताभिर्युवतीभिरलङ्कृतम् । गृहं चान्तःपुरं सुभ्रु क्रीडारतिविराजितम् ॥ ४५ ॥ तत्सर्वं त्वां समुद्दिश्य सहसाहमुपागतः । अकस्मात् मां प्रशंसन्ति सदा गृहगताः स्त्रियः । सुवासा दर्शनीयश्च नान्योऽस्ति त्वादृशः पुमान् ॥ ४६ ॥

भीमसेन उवाच । दिष्ट्या त्वं दर्शनीयोऽद्य दिष्ट्यात्मानं प्रशंससि । ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ॥ ४७ ॥ स्पर्शं वेत्सि विदग्धस्त्वं कामधर्मविचक्षणः । स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह ॥ ४८ ॥

वैशम्पायन उवाच । इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः । सहसोत्पत्य कौन्तेयः प्रहस्येदमुवाच ह ॥ ४९ ॥ अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि । द्रक्ष्यतेऽद्रिप्रतीकाशं सिंहेनेव महागजम् ॥ ५० ॥ निराबाधा त्वयि हते सैरिन्ध्री विचरिष्यति । सुखमेव चरिष्यन्ति सैरिन्ध्र्याः पतयः सदा ॥ ५१ ॥ ततो जग्राह केशेषु माल्यवत्सु महाबलः । स केशेषु परामृष्टो बलेन बलिनाम्वरः ॥ ५२ ॥ आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम् । बाहुयुद्धं तयोरासीत् क्रुद्धयोर्नरसिंहयोः ॥ ५३ ॥ वसन्ते वासिताहेतोर्बलवद्गजयोरिव । कीचकानान्तु मुख्यस्य नराणामुत्तमस्य च ॥ ५४ ॥ वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः । अन्योऽन्यमभिसंरब्धौ परस्परजयैषिणौ ॥ ५५ ॥ ततः समुद्यम्य भुजौ पञ्चशीर्षाविवोरगौ । नखदंष्ट्राभिरन्योऽन्यं घ्नतः क्रोधविषोद्धतौ ॥ ५६ ॥ वेगेनाभिहतो भीमः कीचकेन बलीयसा । स्थिरप्रतिज्ञः स रणे पदान्न चलितः पदम् ॥ ५७ ॥ तावन्योऽन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम् । उभावपि प्रकाशेते प्रवृद्धौ वृषभा-

विव ॥ ५८ ॥ तयोरासीत् सुतुमुलः सम्प्रहारः सुदारुणः । नखदन्तायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥५९॥ अभिपत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः । मातङ्ग इव मातङ्गं प्रभिन्नकरटामुखम् ॥६०॥ स चाप्येनं तदा भीमः प्रतिजग्राह वीर्य्यवान् । तमाक्षिपत् कीचकोऽथ बलेन बलिनां वरः ॥ ६१ ॥ तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा । शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ॥ ६२ ॥ अथैनमाक्षिप्य बलाद्गृहमध्ये वृकोदरः । धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ६३ ॥ भीमेन च परामृष्टो दुर्बलो बलिना रणे । व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ॥ ६४ ॥ ईषदाकलितं चापि क्रोधात् द्रुतपदं स्थितम् । कीचको बलवान् भीमं जानुभ्यामाक्षिपद्भुवि ॥ ६५ ॥ पातितो भुवि भीमस्तु कीचकेन बलीयसा । उत्पपाताथ वेगेन दण्डपाणिरिवान्तकः ॥६६॥ स्पर्द्धया च बलोन्मत्तौ तावुभौ सूतपाण्डवौ । निशीथे पर्य्यकर्षतां बलिनौ निर्जने स्थले ॥ ६७ ॥ ततस्तद्भवनश्रेष्ठं प्राकम्पत मुहुर्मुहुः बलवच्चापि संक्रुद्धावन्योऽन्यं प्रतिगर्ज्जताम् ॥ ६८ ॥ तलाभ्यां स तु भीमेन वक्षस्यभिहतो बली । कीचको रोषसन्तप्तः पदान्न चलितः पदम् ॥ ६९ ॥ मुहूर्त्तं तु स तं वेगं सहित्वा भुवि दुःसहम् । बलादहीयत तदा सूतो भीमबलार्दितः ॥ ७० ॥ तं हीयमानं विज्ञाय भीमसेनो महाबलः । वक्षस्यानीय वेगेन ममर्द्द नं विचेतसम् ॥ ७१ ॥ क्रोधाविष्टो विनिःश्वस्य पुनश्चैनं वृकोदरः । जग्राह जयतां श्रेष्ठः केशेष्वेव तदा भृशम् ॥ ७२ ॥ गृहीत्वा कीचकं भीमो विरुराव महाबलः । शार्दूलः पिशिताकाङ्क्षी गृहीत्वेव महामृगम् ॥ ७३ ॥ तत एनं परिश्रान्तमुपलभ्य वृकोदरः । योजयामास बाहुभ्यां पशुं रशनया यथा ॥ ७४ ॥ नदन्तञ्च महानादं भिन्नभेरीसमस्वनम् । भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ॥ ७५ ॥ प्रगृह्य तरसा दोर्भ्यां कण्ठं

कर्म.२८। अपीड़यत कृष्णायास्तदा कोपोपशान्तये ॥ ७६ ॥
अथ तम्भग्नसर्वाङ्गं व्यविद्धनयनाम्बरम् । आक्रम्य च कटीदेशे
जानुना कीचकाधमम् ॥ ७७ ॥ अपीड़यत बाहुभ्यां पशुमार-
ममारयत् । तं विषीदन्तमाघ्राय कीचकं पाण्डुनन्दनः ॥ ७८ ॥
भूतले भ्रामयामास वाक्यं चेदमुवाच ह । अद्याहमनृणो भूत्वा
भ्रातुर्भार्य्यापहारिणम् । शान्तिं लब्धास्मि परमां हत्वा सैरिन्ध्रि
कण्टकम् ॥ ७९ ॥ इत्येवमुक्त्वा पुरुषप्रवीरस्तं कीचकं क्रोधसं-
रागनेत्रः । आस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तनेत्रं व्यसुमुत्ससर्ज्ज
॥ ८० ॥ निष्पिष्य पाणिना पाणिं सन्दष्टौष्ठपुटं बली । समाक्रम्य
च संक्रुद्धो बलेन बलिनां वरः ॥ ८१ ॥ तस्य पादौ च पाणी च
शिरो ग्रीवाञ्च सर्वशः । काये प्रवेशयामास पशोरिव पिनाकधृक्
॥ ८२ ॥ तं संमथितसर्वाङ्गं मांसपिण्डोपमं कृतम् । कृष्णाया
दर्शयामास भीमसेनो महाबलः ॥ ८३ ॥ उवाच च महातेजा
द्रौपदीं योषितां वराम् । पश्यैनमेहि पाञ्चालि कामुकोऽयं यथा-
कृतः ॥ ८४ ॥ एवमुक्त्वा महाराज भीमो भीमपराक्रमः । पादेन
पीड़यामास तस्य कायं दुरात्मनः ॥ ८५ ॥ ततोऽग्निं तत्र प्रज्वाल्य
दर्शयित्वा तु कीचकम् । पाञ्चालीं स तदा वीर इदं वचनमब्र-
वीत् ॥ ८६ ॥ प्रार्थयन्ति सुकेशान्ते ये त्वां शीलगुणान्विताम् ।
एवन्ते भीरु वध्यन्ते कीचक शोभते यथा ॥ ८७ ॥ तत् कृत्वा
दुष्करं कर्म कृष्णायाः प्रियमुत्तमम् । तथा स कीचकं हत्वा गत्वा
रोषस्य वै शमम् ॥ ८८ ॥ आमन्त्र्य द्रौपदीं कृष्णां क्षिप्रमायां-
न्महानसम् । कीचकं घातयित्वा तु द्रौपदी योषितां वरा ॥८९॥
प्रहृष्टा गतसन्तापा सभापालानुवाच ह । कीचकोऽयं हतः शेते
गन्धर्वैः पतिभिर्मम ॥ ९० ॥ परस्त्रीकामसंमत्तस्तत्रागच्छत पश्यत ।
प्र. तच्छ्रुत्वा भाषितं तस्या नर्त्तनागाररक्षिणः ॥ ९१ ॥ सहसैव
स्थिताः सहस्रशः । ततो गत्वाथ तद्वेश्म कीचकं

विनिपातितम् ॥ ९२ ॥ गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् । पाणिपादविहीनन्तु दृष्ट्वा च व्यथिताभवन् ॥ ९३ ॥ निरीक्षन्ति ततः सर्व्वे परं विस्मयमागताः । अमानुषकृतं कर्म तं दृष्ट्वा विनिपातितम् ॥ ९४ ॥ क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा । इति स्म तं परीक्षन्ते गन्धर्व्वेण हतं तदा ॥ ९५ ॥

इति विराटपर्व्वणि कीचकवधपर्व्वणि कीचकवधे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

वैशम्पायन उवाच । तस्मिन् काले समागम्य सर्व्वे तत्रास्य बान्धवाः । रुरुदुः कीचकं दृष्ट्वा परिवार्य्य समन्ततः ॥ १ ॥ सर्व्वे संहृष्टरोमाणः सन्त्रस्ताः प्रेक्ष्य कीचकम् । तथा सम्भिन्नसर्व्वाङ्गं कूर्म्मं स्थल इवोद्धृतम् ॥ २ ॥ पोथितं भीमसेनेन तमिन्द्रेणेव दानवम् । संस्कारयितुमिच्छन्तो वहिर्नेतुं प्रचक्रमुः ॥ ३ ॥ ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः । अदूराच्चानवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीम् ॥ ४ ॥ समवेतेषु सर्व्वेषु तानूचुरुपकीचकाः । हन्यतां शीघ्रमसतीं यत्कृते कीचको हतः ॥ ५ ॥ अथ वा नैव हन्तव्या दह्यतां कामिना सह । मृतस्यापि प्रियं कार्य्यं सूतपुत्रस्य सर्व्वथा ॥ ६ ॥ ततो विराटमूचुस्ते कीचकोऽस्याः कृते हतः । सहानयाद्य दह्येम तदनुज्ञातुमर्हसि ॥ ७ ॥ पराक्रमन्तु सूतानां मत्वा राजान्वमोदत । सैरिन्ध्र्याः सूतपुत्रेण सह दाहं विशाम्पतिः ॥ ८ ॥ तां समासाद्य वित्रस्तां कृष्णां कमललोचनाम् । मोमुह्यमानां ते तत्र जगृहुः कीचका भृशम् ॥ ९ ॥ ततस्तु तां समारोप्य निबध्य च सुमध्यमाम् । जग्मुरुद्यम्य ते सर्व्वे श्मशानाभिमुखास्तदा ॥ १० ॥ ह्रियमाणा तु सा राजन् सूतपुत्रैरनिन्दिता । प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ ११ ॥

द्रौपद्युवाच। जयो जयन्तो विजयो जयत्सेनो जयद्बलः।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम्॥ १२॥ येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशने। व्यश्रूयत महायुद्धे भीमघोषस्तरस्विनाम्॥ १३॥ रथघोषश्च बलवान् गन्धर्वाणां तरस्विनाम्।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम्॥ १४॥

वैशम्पायन उवाच। तस्यास्ताः कृपणा वाचः कृष्णायाः परिदेविताः। श्रुत्वैवाभ्यपतद्भीमः शयनादविचारयन्॥ १५॥

भीमसेन उवाच। अहं शृणोमि ते वाचं त्वया सैरिन्ध्रि भाषिताम्। तस्मात्ते सूतपुत्रेभ्यो भयं भीरु न विद्यते॥ १६॥

वैशम्पायन उवाच। इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया। ततः स व्यायतं कृत्वा वेशं विपर्ययकृतं च॥ १७॥ अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा। स भीमसेनः प्राकारमारुह्य तरसा द्रुतम्॥ १८॥ श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः। स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात्॥ १९॥ जवेन पतितो भीमः सूतानामग्रतस्तदा। चितासमीपे गत्वा स तत्रापश्यद्वनस्पतिम्॥ २०॥ तालमात्रं महास्कन्धमूर्ध्वशुष्कं विशाम्पते। तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च॥ २१॥ स्कन्धमारोपयामास दशव्यामं परन्तप। स तं वृक्षं दशव्यामं सस्कन्धविटपं बली॥ २२॥ प्रगृह्याभ्यद्रवत् सूतान् दण्डपाणिरिवान्तकः। ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः॥ २३॥ भूमौ निपातिता वृक्षाः सङ्घशस्तत्र शेरते। तं सिंहमिव सङ्क्रुद्धं दृष्ट्वा गन्धर्वमागतम्॥ २४॥ वित्रेसुः सर्वशः सूता विषादभयकम्पिताः। तमन्तकमिवायान्तं गन्धर्वं प्रेक्ष्य ते तदा॥ २५॥ दिधक्षन्तस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः। परस्परमथोचुस्ते विषादभयकम्पिताः॥ २६॥ गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम्। सैरिन्ध्री मुच्यतां शीघ्रं यतो नो भयमागतम्॥ २७॥ ते तु दृष्ट्वा तदा-

विद्‌ भीमसेनेन पादपम्‌। विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति ॥ २८ ॥ द्रवतस्तांस्तु सम्प्रेक्ष्य स वज्री दानवानिव। शतं पञ्चाधिकं भीम प्राहिणोद्यमसादनम्‌ ॥ २९ ॥ वृक्षेण तेन राजेन्द्र प्रभञ्जनसुतो बली। तत आश्वासयत्‌ कृष्णां स विमुच्य विशाम्पते ॥ ३० ॥ उवाच च महाबाहुः पाञ्चालीं तत्र द्रौपदीम्‌। अश्रुपूर्णमुखीन्दीनां दुर्द्धर्षः स वृकोदरः ॥ ३१ ॥ एवन्ते भीरु वध्यन्ते ये त्वां क्लिश्नन्त्यनागसम। प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव। अन्येनाहं गमिष्यामि विराटस्य महानसम्‌ ॥ ३२ ॥

वैशम्पायन उवाच। पञ्चाधिकं शत तच्च निहतं तत्र भारत। महावनमिव छिन्नं शिश्ये विगलितद्रुमम ॥ ३३ ॥ एवन्ते निहता राजन्‌ शतं पञ्च च कीचकाः। स च सेनापतिः पूर्व्वमित्येतत्‌ सूतषट्‌शतम्‌ ॥ ३४ ॥ तद्दृष्ट्वा महदाश्चर्य्यं नरा नार्य्यश्च सङ्गताः। विस्मयं परम गत्वा नोचुः किञ्चन भारत ॥ ३५ ॥

इति विराटपर्व्वणि कीचकवधपर्व्वणि उपकीचकवधे त्रयोविंशोऽध्याय ॥ २३ ॥

---

वैशम्पायन उवाच। ते दृष्ट्वा निहतान्‌ सूतान्‌ राज्ञे गत्वा न्यवेदयन्‌। गन्धर्व्वैर्निहता राजन्‌ सूतपुत्रा महाबलाः ॥ १ ॥ यथा वज्रेण वै दीर्णं पर्व्वतस्य महच्छिरः। व्यतिकीर्णाः प्रदृश्यन्ते तथा सूता महीतले ॥ २ ॥ सैरिन्ध्री च विमुक्तासौ पुनरायाति ते गृहम्‌। सर्व्वं संशयितं राजन्‌ नगरन्ते भविष्यति ॥३॥ यथारूपा च सैरिन्ध्री गन्धर्व्वाश्च महाबलाः। पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४ ॥ यथा सैरिन्ध्रिवेशेण न ते राजन्निदं पुरम्‌। विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम्‌ ॥ ५ ॥ तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः। अब्रवीत्‌ क्रियतामेषां

सूतानां परमा क्रिया ॥ ६ ॥ एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने। दह्यन्तां कीचकाः शीघ्रं रत्नैर्गन्धैश्च सर्वशः ॥ ७ ॥ सुदेष्णामब्रवीद्राजा महिषीं जातसाध्वसः। सैरिन्ध्रीमागतां ब्रूया ममैव वचनादिदम् ॥ ८ ॥ गच्छ सैरिन्ध्रि भद्रन्ते यथाकामं वरानने। बिभेति राजा सुश्रोणि गन्धर्वेभ्यः पराभवात् ॥ ९ ॥ न हि त्वामुत्सहे वक्तुं स्वयं गन्धर्वरक्षिताम्। स्त्रियास्त्वदोषस्त्वां वक्तुमतस्त्वां प्रब्रवीम्यहम् ॥ १० ॥

वैशम्पायन उवाच। अथ मुक्ता भयात् कृष्णा सूतपुत्रान्निरस्य च। मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ ११ ॥ त्रासितेव मृगी बाला शार्दूलेन मनस्विनी। गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ॥ १२ ॥ तां दृष्ट्वा पुरुषा राजन् प्राद्रवन्त दिशो दश। गन्धर्वाणां भयत्रस्ताः केचिद्दृष्ट्वा न्यमीलयन् ॥ १३ ॥ ततो महानसद्वारि भीमसेनमवस्थितम्। ददर्श राजन् पाञ्चाली यथा मत्तं महाद्विपम् ॥ १४ ॥ तं विस्मयन्ती शनकैः संज्ञाभिरिदमब्रवीत्। गन्धर्वराजाय नमो येनास्मि परिमोचिता१५

भीम उवाच। ये पुरा विचरन्तीह पुरुषा वशवर्त्तिनः। तस्यास्ते वचनं श्रुत्वा त्वनृणा विहरन्त्यतः ॥ १६ ॥

वैशम्पायन उवाच। ततः सा नर्त्तनागारे धनञ्जयमपश्यत। राज्ञः कन्या विराटस्य नर्त्तयानं महाभुजम् ॥ १७ ॥ ततस्ता नर्त्तनागाराद्विनिष्क्रम्य सहार्जुनाः। कन्या ददृशुरायान्तीं क्लिष्टां कृष्णामनागसम्। दृष्ट्वा तामेत्य सर्वास्ता इदमूचुः सहर्षिताः ॥१८॥

कन्या ऊचुः। दिष्ट्या सैरिन्ध्रि मुक्तासि दिष्ट्यासि पुनरागता। दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसम् ॥ १९ ॥

बृहन्नलोवाच। कथं सैरिन्ध्रि मुक्तासि कथं पापाश्च ते हताः। इच्छामि वै तव श्रोतुं सर्वमेव यथातथम् ॥ २० ॥

सैरिन्ध्र्युवाच। बृहन्नले किन्नु तव सैरिन्ध्र्या कार्य्यमद्य वै।

सा त्वं वससि कल्याणि सदा कन्यापुरे सुखम् ॥ २१ ॥ न हि दुःखमवाप्नोषि सैरिन्ध्री यदुपाश्नुते । तेन मां दुःखितामेवं पृच्छसे प्रहसन्निव ॥ २२ ॥

बृहन्नलोवाच । बृहन्नलापि कल्याणि दुःखमाप्नोत्यनुत्तमम् । तिर्य्यग्योनिगता बाले न चैनमवबुध्यसे ॥ २३ ॥ त्वया सहोषिता चास्मि त्वं च सर्वैः सहोषिता । क्लिश्यन्त्यां त्वयि सुश्रोणि को नु दुःखं न चिन्तयेत् ॥ २४ ॥ न तु केनचिदत्यन्तं कस्यचिद्हृदयं क्वचित् । वेदितुं शक्यते नूनं तेन मां नावबुध्यसे ॥ २५ ॥

वैशम्पायन उवाच । ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत् । प्रविवेश सुदेष्णायाः समीपमुपगामिनी ॥ २६ ॥ तामब्रवीद्राजपत्नी विराटवचनादिदम् । सैरिन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ॥ २७ ॥ राजा बिभेति ते भद्रे गन्धर्वेभ्यः पराभवात् । त्वञ्चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि । पुंसामिष्टश्च विषयो गन्धर्वाश्चातिकोपनाः ॥ २८ ॥

सैरिन्ध्र्युवाच । त्रयोदशाहमात्रं मे राजा क्षाम्यतु भामिनि । कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ॥ २९ ॥ ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियम् । ध्रुवञ्च श्रेयसा राजा योक्ष्यते सह बान्धवैः ॥ ३० ॥

इति विराटपर्वणि कीचकवधपर्वणि कीचकदाहे चतुर्विंशोऽध्यायः समाप्तञ्च कीचकवधपर्व ॥ २४ ॥

---

## अथ गोहरणपर्व ।

वैशम्पायन उवाच । कीचकस्य तु घातेन सानुजस्य विशांपते । अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥ १ ॥ तस्मिन् जनपदे चक्रुर्भ्यो॒ऽकूच सर्वशः । शौर्य्याद्धि वल्लभो राज्ञो

महासत्त्वश्च कीचक. ॥ २ ॥ आसीत् प्रहर्त्ता सैन्यानां दारामर्षी च दुर्मतिः। स हत खलु पापात्मा गन्धर्वैर्दुष्टपूरुषः ॥ ३ ॥ इत्थ-जल्पन्महाराज परानीकविनाशनम्। देशे देशे मनुष्याश्च कीचकं दुष्प्रधर्षणम् ॥ ४ ॥ अथ वै धार्त्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः। मृगयित्वा बहून् ग्रामान् राष्ट्राणि नगराणि च ॥ ५ ॥ संविधाय यथादृष्टं यथादेशप्रदर्शनम्। कृतकृत्या न्यवर्त्तन्त ते चरा नगरं प्रति ॥ ६ ॥ तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम्। द्रोण-कर्णकृपैः सार्द्धं भीष्मेण च महात्मना ॥ ७ ॥ सङ्गतं भ्रातृभिश्चापि त्रिगर्त्तैश्च महारथैः। दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥८॥

चरा ऊचुः। कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा। पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने ॥ ९ ॥ निर्जने मृग-सङ्कीर्णे नानाद्रुमलताकुले। लताप्रतानबहुले नानागुल्मसमावृते ॥ १० ॥ न च विद्मो गता येन पार्थाः स्युर्दृढविक्रमाः। मार्गमाणाः पदन्यासं तेषु तेषु तथा तथा ॥ ११ ॥ गिरिकूटेषु दुर्गेषु नाना-जनपदेषु च। जनाकीर्णेषु देशेषु कर्टकेषु परेषु च ॥ १२ ॥ नरेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान्। अत्यन्तं वा विनष्टास्ते भद्रन्तुभ्यं नरर्षभ ॥ १३ ॥ वर्त्मन्यन्वेष्यमाणा वै रथिनां रथि-सत्तम। न हि विद्मो गतिं तेषां वासं हि नरसत्तम ॥ १४ ॥ कञ्चित् कालं मनुष्येन्द्र सूतानामनुगा वयम्। मृगयित्वा यथा-न्यायं विदितार्थाः स्म तत्त्वतः ॥ १५ ॥ प्राप्ता द्वारवतीं सूता विना पार्थैः परन्तप। न तत्र कृष्णा राजेन्द्र पाण्डवाश्च महा-व्रताः ॥ १६ ॥ सर्वथा विप्रनष्टास्ते नमस्ते भरतर्षभ। न हि विद्मो गतिं तेषां वासं वापि महात्मनाम् ॥ १७ ॥ पाण्डवानां प्रवृत्तिञ्च विद्मः कर्मापि वा कृतम्। स नः शाधि मनुष्येन्द्र अत ऊर्द्ध्वं विशाम्पते ॥ १८ ॥ अन्वेषणे पाण्डवानां भूयः किं करवा-महे। इमाञ्च नः प्रियां वीर वाचं भद्रवतीं शृणु ॥ १९ ॥ येन

त्रिगर्त्ता निहता बलेन महता नृप । सूतेन राज्ञो मत्स्यस्य
कीचकेन पुनः पुनः ॥ २० ॥ स हतः पतितः शेते गन्धर्वैर्निशि
भारत । अदृश्यमानैर्दुष्टात्मा भ्रातृभिः सह सोदरैः ॥ २१ ॥
प्रियमेतदुपश्रुत्य शत्रूणाञ्च पराभवम् । कृतकृत्यश्च कौरव्य विधत्स्व
यदनन्तरम् ॥ २२ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि चारप्रत्यागमने
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

वैशम्पायन उवाच । ततो दुर्य्योधनो राजा श्रुत्वा तेषां
वचस्तदा । चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः ॥१॥ सुदुःखा
खलु कार्य्याणां गतिर्विज्ञातुमन्तत । तस्मात् सर्व्वे निरीक्षध्वं क्व
नु ते पाण्डवा गताः ॥ २ ॥ अल्पावशिष्टं कालस्य गतभूयिष्ठ-
मन्ततः । तेषामज्ञातचर्य्याणामस्मिन्वर्षे त्रयोदशे ॥ ३ ॥ अस्य
वर्षस्य शेषञ्चेत् व्यतीयुरिह पाण्डवाः । निवृत्तसमयास्ते हि सत्य-
व्रतपरायणाः ॥ ४ ॥ क्षरन्त इव नागेन्द्राः सर्व्वे ह्याशीविषोपमाः ।
दुःखा भवेयुः संरब्धाः कौरवान् प्रति ते ध्रुवम् ॥ ५ ॥ सर्व्वे कालस्य
वेत्तारः कृच्छ्ररूपधराः स्थिताः । प्रविशेयुर्जितक्रोधास्तावदेव
पुनर्व्वनम् ॥ ६ ॥ तस्मात् क्षिप्रं बुभूषध्वं प्रतिकर्त्तव्यमस्य यत् ।
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरम्भवेत् ॥ ७ ॥ अथाब्रवीत्ततः
कर्णः क्षिप्रं गच्छन्तु भारत । अन्ये धूर्त्ता नरा दक्षा निभृताः
साधुकारिणः ॥ ८ ॥ चरन्तु देशान् संवीताः स्फीतान् जनपदा-
कुलान् । तत्र गोष्ठीषु रम्यासु सिद्धप्रव्रजितेषु च ॥ ९ ॥ परि-
चारेषु तीर्थेषु विविधेष्वाकरेषु च । विज्ञातव्या मनुष्यैस्तैस्तर्कया
सुविनीतया ॥ १० ॥ विविधैस्तत्परैः सम्यक् तज्ज्ञैर्निपुणसंवृतैः
अन्वेष्टव्याः सुनिपुणैः पाण्डवाश्छन्नवासिनः ॥ ११ ॥ नदीकु-

तीर्थेषु ग्रामेषु नगरेषु च। आश्रमेषु च रम्येषु पर्वतेषु गुहासु
च॥ १२ ॥ अथाग्रजानन्तरजः पापभावानुरागवान्। ज्येष्ठं
दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत्॥ १३ ॥ येषु नः प्रत्ययो
राजंश्चारेषु मनुजाधिप। ते यान्तु दत्तदेया वै भूयस्तान् परि-
मार्गितुम्॥ १४ ॥ एतच्च कर्णो यत् प्राह सर्वमीहामहे तथा।
यथोद्दिष्टं चराः सर्वे मृगयन्तु ततस्ततः॥ १५ ॥ एते चान्ये च
भूयांसो देशाद्देशं यथाविधि। न तु तेषां गतिर्वासः प्रवृत्तिश्चोप-
लभ्यते॥ १६ ॥ अत्यन्तं वा निगूढ़ास्ते पारं वोर्मिमतो गताः।
व्यालैश्चापि महारण्ये भक्षिताः शूरमानिनः॥ १७ ॥ अथ वा
विषमं प्राप्य विनष्टाः शाश्वतीः समाः। तस्मान्मानसमव्यग्रं कृत्वा
त्वं कुरुनन्दन। कुरु कार्य्यं महोत्साहं मन्यसे यन्नराधिप॥ १८ ॥

इति विराटपर्वणि गोहरणपर्वणि कर्णदुःशासनवाक्ये
षड्विंशोऽध्यायः॥ २६ ॥

---

वैशम्पायन उवाच। अथाब्रवीन्महावीर्य्यो द्रोणस्तत्त्वार्थ-
दर्शिवान्। न तादृशा विनश्यन्ति न प्रयान्ति पराभवम्॥ १ ॥
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः। धर्मज्ञाश्च कृतज्ञाश्च
धर्मराजमनुव्रताः॥ २ ॥ नीतिधर्मार्थतत्त्वज्ञं पितृवच्च समा-
हिताः। धर्मे स्थितं सत्यधृतिं ज्येष्ठं ज्येष्ठानुयायिनः॥ ३ ॥
अनुव्रता महात्मानं भ्रातरो भ्रातरं नृप। अजातशत्रुं श्रीमन्तं
सर्वभ्रातॄननुव्रतम्॥ ४ ॥ तेषां तथाविधेयानां निभृतानां महा-
त्मनाम्। किमर्थं नीतिमान् पार्थः श्रेयो नैषां करिष्यति॥ ५ ॥
तस्माद्यत्नात् प्रतीक्षन्ते कालस्योदयमागतम्। न हि ते नाश-
मृच्छेयुरिति पश्याम्यहं धिया॥ ६ ॥ साम्प्रतं चैव यत्कार्य्यं तच्च
क्षिप्रमकालिकम्। क्रियतां साधु सञ्चिन्त्य वासश्चैषां प्रचिन्त्यताम्॥ ७

यथावत् पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् । दुर्ज्ञेयाः खलु शूरास्ते दुरापास्तपसावृताः ॥ ८ ॥ शुद्धात्मा गुणवान् पार्थः सत्यवान्नीतिमान् शुचिः । तेजोराशिरसंख्येयो गृह्णीयादपि चक्षुषा ॥ ९ ॥ विज्ञाय क्रियतां तस्माद्भूयश्च मृगयामहे । ब्राह्मणैश्चारकैः सिद्धैर्ये चान्ये तद्विदो जनाः ॥ १० ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि चारप्रत्याचारे द्रोणवाक्ये सप्तविंशोऽध्यायः ॥ २७ ॥

---

वैशम्पायन उवाच । ततः शान्तनवो भीष्मो भरतानां पितामहः । श्रुतवान् देशकालज्ञस्तत्त्वज्ञः सर्वधर्मवित् ॥ १ ॥ आचार्य्यवाक्योपरमे तद्वाक्यमभिसन्दधत् । हितार्थं समुवाचेमां भारतीं भरतान् प्रति ॥ २ ॥ युधिष्ठिरे समासक्तां धर्मज्ञे धर्मसंवृताम् । असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ॥ ३ ॥ भीष्मः समवदत्तत्र गिरं साधुभिरर्च्चिताम् । यथैष ब्राह्मणः प्राह द्रोणः सर्व्वार्थतत्त्ववित् । तद्वाक्यमभिनन्दामि न मे तत्र विचारणा ॥ ४ ॥ सर्व्वलक्षणसम्पन्नाः साधुव्रतसमन्विताः । श्रुतव्रतोपपन्नाश्च नानाश्रुतिसमन्विताः ॥ ५ ॥ वृद्धानुशासने युक्ताः सत्यव्रतपरायणाः । समयं समयज्ञास्ते पालयन्तः शुचिव्रताः ॥ ६ ॥ क्षत्रधर्मरता नित्यं केशवानुगताः सदा । प्रवीरपुरुषास्ते वै महात्मानो महाबलाः ॥ ७ ॥ नावसीदितुमर्हन्ति उद्वहन्तः सतां धुरम् । धर्मतश्चैव गुप्तास्ते सुवीर्य्येण च पाण्डवाः ॥ ८ ॥ न नाशमधिगच्छेयुरिति मे धीयते मतिः । तत्र बुद्धिं प्रवक्ष्यामि पाण्डवान् प्रति भारत ॥ ९ ॥ न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः । यत्तु शक्यमिहास्माभिस्तान्वै सञ्चिन्त्य पाण्डवान् । बुद्ध्या प्रयुक्तं न द्रोहात् प्रवक्ष्यामि निबोध तत् ॥ १० ॥

महात्मानो महाबलाः । ... मिताजसः ॥ ७ ॥

त्वियं मातृश्रेनीतिस्तस्य वाच्या कदाचन ॥ ११ ॥ सा त्वियं साधु वक्तव्या न त्वनीतिः कथञ्चन । वृद्धानुशासने तात तिष्ठता सत्य-शीलिना ॥ १२ ॥ अवश्यं त्विह धीरेण सभामध्ये विवक्षता । यथार्थमिह वक्तव्यं सर्वथा धर्मलिप्सया ॥ १३ ॥ तत्र नाहं तथा मन्ये यथायमितरो जनः । निवासं धर्मराजस्य वर्षेऽस्मिन् वै त्रयोदशे ॥ १४ ॥ तत्र तात न तेषां हि राज्ञा भाव्यमसाम्प्रतम् । पुरे जनपदे चापि यत्र राजा युधिष्ठिरः ॥ १५ ॥ दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः । जनैर्जनपदे भाव्यो यत्र राजा युधिष्ठिरः ॥ १६ ॥ प्रियवादी सदा दान्तो भाव्यः सत्यपरो जनः । हृष्टः पुष्टः शुचिर्दक्षो यत्र राजा युधिष्ठिरः ॥ १७ ॥ नासूयको न चापीर्षुर्नाभिमानी न मत्सरी । भविष्यति जनस्तत्र स्वयं धर्म-मनुव्रतः ॥ १८ ॥ ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च । क्रत-वश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ १९ ॥ सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः । सम्पन्नसस्या च मही निरातङ्का भविष्यति ॥ २० ॥ फलवन्ति च धान्यानि रसवन्ति फलानि च । गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥ २१ ॥ वायुश्च सुख-संस्पर्शो निष्प्रतीपञ्च दर्शनम् । भयं नाभ्याविशत्तत्र यत्र राजा युधिष्ठिरः ॥ २२ ॥ गावश्च बहुलास्तत्र न कृशा न च दुर्बलाः । पयांसि दधि सर्पींषि रसवन्ति हितानि च ॥ २३ ॥ गुणवन्ति च पेयानि भोज्यानि रसवन्ति च । तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ॥ २४ ॥ रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणा-न्विताः । दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ॥ २५ ॥ धर्माश्च तत्र सर्वैस्तु सेविताश्च द्विजातिभिः । स्वैः स्वैर्गुणैश्च संयुक्ता अस्मिन् वर्षे त्रयोदशे ॥ २६ ॥ देशे तस्मिन् भविष्यन्ति तात पाण्डव-संप्रयोगात् । प्रीतिमान् जनस्तत्र सन्तुष्टः शुचिरव्ययः ॥ २७ ॥ ... इति पश्चात्य-... दम्भनानुरागवान् । दृष्टरतो नहोत्साहः स्व-... कालिकम् । क्रि

अशुद्धकर्मपरायणाः ॥२८॥ अशुभद्विट् शुभप्रेप्सुर्निश्चयशुः शुभव्रतः । भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः ॥ २९ ॥ त्यक्तवाक्यानृतस्तात शुभकल्याणमङ्गलः । शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः ॥ ३० ॥ भविष्यति जनस्तत्र नित्यञ्चेष्टप्रियव्रतः । धर्मात्मा शक्यते ज्ञातुं नापि तात द्विजातिभिः ॥ ३१ ॥ किं पुनः प्राकृतैस्तात पार्थो विज्ञायते क्वचित् । यस्मिन् सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ॥ ३२ ॥ ह्रीः श्री कीर्त्तिः परन्तेज आनृशंस्यमथार्ज्जवम् । तस्मात्तत्र निवासन्तु छन्नं यत्नेन धीमत. ॥ ३३ ॥ गतिञ्च परमां तस्य नोत्सहे वक्तुमन्यथा । एवमेतत्तु सञ्चिन्त्य यत् कृतं मन्यसे हितम् । तत् क्षिप्रं कुरु कौरव्य यद्येवं श्रद्दधासि मे ॥ ३४ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि चारप्रत्याचारे भीष्मवाक्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

---

वैशम्पायन उवाच । ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा । युक्तं प्राप्तञ्च वृद्धेन पाण्डवान् प्रतिभाषितम् ॥ १ ॥ धर्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतुकम् । तत्रानुरूपं भीष्मेण ममाप्यत्र गिरं शृणु ॥ २ ॥ तेषाञ्चैव गतिस्तीर्थैर्वासश्चैषां प्रचिन्त्यताम् । नीतिर्विधीयतां चापि साम्प्रतं या हिता भवेत् ॥ ३ ॥ नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता । किं पुन. पाण्डवास्तात सर्वास्त्रकुशला रणे ॥ ४ ॥ तस्मात् सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु । गूढभावेषु छन्नेषु काले चोदयमागते ॥ ५ ॥ स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मन । उदयः पाण्डवानाञ्च प्राप्ते काले न संशयः ॥ ६ ॥ निवृत्तसमयाः पार्था महात्मानो महाबलाः । महोत्साहा भविष्यन्ति पाण्डवा ह्यमितौजसः ॥ ७ ॥

तस्मादूबलञ्च कोषञ्च नीतिश्चापि विधीयताम् । यथाकालोदये प्राप्ते सम्यक्तैः सन्दधीमहे ॥ ८ ॥ तात बुध्यामि तत्सर्वं बुध्यस्व बलमात्मनः । नियतं सर्वमित्रेषु बलवत्सु बलेषु च ॥ ९ ॥ उच्चावचं बलं ज्ञात्वा मध्यस्थञ्चापि भारत । प्रहृष्टमप्रहृष्टञ्च सन्दधाम-स्तथा परैः ॥ १० ॥ साम्ना भेदेन दानेन दण्डेन बलिकर्मणा । न्यायेनाक्रम्य च परान् बलाच्चानम्य दुर्बलान् ॥ ११ ॥ सान्त्वयित्वा तु मित्राणि बलञ्चाभाष्यतां सुखम् । सकोषबलसंवृद्धः सम्यक् सिद्धिमवाप्स्यसि ॥ १२ ॥ योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः । अन्यैस्त्वं पाण्डवैर्वापि हीनैश्च बलवाहनैः ॥ १३ ॥ एवं सर्वं विनिश्चित्य व्यवसाय स्वधर्मतः । यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ॥ १४ ॥

इति विराटपर्वणि गोहरणपर्वणि चारप्रत्याचारे कृपवाक्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

वैशम्पायन उवाच । अथ राजा त्रिगर्त्तानां सुशर्मा रथयूथप । प्राप्तकालमिदं वाक्यमुवाच त्वरितो बली ॥ १ ॥ असकृन्निकृतः पूर्वं मत्स्यशाल्वेयकैः प्रभो । सूतेनैव च मत्स्यस्य कीचकेन पुनः पुनः ॥ २ ॥ बाधितो बन्धुभिः सार्द्धं बलाद्बलवतां विभो । स कर्णमभ्युदीक्ष्याथ दुर्योधनमभाषत ॥ ३ ॥ असकृन्मत्स्यराज्ञा मे राष्ट्रं बाधितमोजसा । प्रणेता कीचकस्तस्य बलवानभवत् पुरा ॥ ४ ॥ क्रूरोऽमर्षी स दुष्टात्मा भुवि प्रख्यातविक्रमः । निहतः स तु गन्धर्वैः पापकर्मा नृशंसवान् ॥ ५ ॥ तस्मिन् विनिहते राजा हतदर्पो निराश्रयः । भविष्यति निरुत्साहो विराट इति मे मतिः ॥ ६ ॥ तत्र यात्रा मम मता यदि ते रोचतेऽनघ । कौरवाणाञ्च सर्वेषां कर्णस्य च महात्मनः ॥ ७ ॥ एतत् प्राप्तमहं मन्ये कार्य्य-

माश्रयिकं हि नः । राष्ट्रन्तस्याभियास्यामो बहुधान्यसमाकुलम् ॥ ८ ॥
आहरामोऽस्य रत्नानि विविधानि वसूनि च । ग्रामान्राष्ट्राणि वा
तस्य हरिष्यामो विभागशः ॥ ९ ॥ अथ वा गोसहस्राणि शुभानि
च बहूनि च । विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात् ॥ १० ॥
कौरवैः सह सङ्गत्य त्रिगर्त्तैश्च विशाम्पते । गास्तस्यापहरामोऽद्य
सह सर्वैः सुसंहताः ॥ ११ ॥ संविभागेन कृत्वा तु निबध्नीमोऽस्य
पौरुषम् । हत्वा चास्य चमूं कृत्स्नां वशमेवानयामहे ॥ १२ ॥
तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् । भवतो बलवृद्धिश्च
भविष्यति न संशयः ॥ १३ ॥ तच्छ्रुत्वा वचनं तस्य कर्णो राजान-
मब्रवीत् । सूक्तं सुशर्म्मणा वाक्यं प्राप्तकालं हितं च नः ॥ १४ ॥
तस्मात् क्षिप्र विनिर्यामो योजयित्वा वरूथिनीम् । विभज्य चाप्य-
नीकानि यथा वा मन्यसेऽनघ ॥ १५ ॥ प्राज्ञो वा कुरुवृद्धोऽयं
सर्वेषां नः पितामहः । आचार्य्यश्च यथा द्रोणः कृप. शारद्वत-
स्तथा ॥ १५ ॥ मन्यन्ते ते यथा सर्वे तथा यात्रा विधीयताम्
सम्मन्त्र्य चाशु निर्यामः साधनार्थं महीपते ॥ १७ ॥ किञ्च नः
पाण्डवैः कार्य्यं हीनार्थबलपौरुषैः । अत्यन्तं वा प्रनष्टास्ते प्राप्ता
वापि यमक्षयम् ॥ १८ ॥ यामो राजन्निरुद्विग्ना विराटनगरं
वयम् । आदास्यामो हि गास्तस्य विविधानि वसूनि च ॥ १९ ॥

वैशम्पायन उवाच । ततो दुर्य्योधनो राजा वाक्यमादाय
तस्य तत् । वैकर्त्तनस्य कर्णस्य क्षिप्रमाज्ञापयत् स्वयम् ॥ २० ॥
शासने नित्यसंयुक्तं दुःशासनमनन्तरम् । सह वृद्धैस्तु सम्मन्त्र्य
क्षिप्रं योजय वाहिनीम् ॥ २१ ॥ यथोद्देशं च गच्छामः सहिता-
स्तत्र कौरवैः । सुशर्मा च यथोद्दिष्टं देशं यातु महारथः ॥ २२ ॥
त्रिगर्त्तैः सहितो राजा समग्रबलवाहनः । प्रागेव हि सुसंवीतो
मत्स्यस्य विषयं प्रति ॥ २३ ॥ जघन्यतो वयं तत्र यास्यामो दिव-
सान्तरे । विषयं मत्स्यराजस्य सुसमृद्धं सुसंहताः ॥ २४ ॥ ते

यान्तु सहितास्तत्र विराटनगरं प्रति। क्षिप्रं गोपान् समासाद्य गृह्णन्तु विपुलं धनम्॥ २५॥ गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च। वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम्॥ २६॥

वैशम्पायन उवाच। ते स्म गत्वा यथोद्दिष्टां दिशं वह्नेर्महीपते। सन्नद्धा रथिनः सर्वे सपदाता बलोत्कटाः॥ २७॥ प्रतिवैरं चिकीर्षन्तो गृह्णा महाबलाः। आदातुं गाः सुशर्माथ कृष्णपक्षस्य सप्तमीम्॥ २८॥ अपरे दिवसे सर्वे राजन् सम्भूय कौरवाः। अष्टम्यान्ते न्यगृह्णन्त गोकुलानि सहस्रशः॥ २९॥

इति विराटपर्वणि गोहरणपर्वणि सुशर्मादिमत्स्यदेशयाने त्रिंशोऽध्यायः॥ ३०॥

---

वैशम्पायन उवाच। ततस्तेषां महाराज तत्रैवामिततेजसाम्। छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनाम्॥ १॥ व्यतीतः समयः सम्यक् वसतां वै पुरोत्तमे। कुर्वतां तस्य कर्माणि विराटस्य महीपतेः॥ २॥ कीचके तु हते राजा विराटः परवीरहा। परां सम्भावनाञ्चक्रे कुन्तीपुत्रेषु वीर्यवान्॥ ३॥ ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत। सुशर्मणा गृहीतन्तद्गोधनं तरसा बहु॥ ४॥ ततो जवेन महता गोपः पुरमथाव्रजत्। स दृष्ट्वा मत्स्यराजञ्च रथात् प्रस्कन्द्य कुण्डली॥ ५॥ शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभि। संवृतं मन्त्रिभिः सार्द्धं पाण्डवैश्च महात्मभिः॥६॥ तं सभायां महाराजमासीनं राष्ट्रवर्द्धनम्। सोऽब्रवीदुपसङ्गम्य विराटं प्रणतस्तदा॥ ७॥ अस्मान् युधि विनिर्ज्जित्य परिभूय सबान्धवान्। गवां शतसहस्राणि त्रिगर्त्ताः कालयन्ति ते॥ ८॥ तान् परीप्सस्व राजेन्द्र मा नेशुः पशवस्तव। तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत्॥ ९॥ रथनागाश्वकलिलां पत्ति-

ध्वजसमाकुलाम् । राजानो राजपुत्राश्च तनुत्राण्यथ भेजिरे ॥ १० ॥ भानुमन्ति विचित्राणि शूरसेव्यानि भागशः । सवज्रायसगर्भन्तु कवचं तत्र काञ्चनम् ॥ ११ ॥ विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् । सर्वपारसवं वर्म कल्याणपटलं दृढम् ॥ १२ ॥ शतानीकादवरजो मदिराश्वोऽभ्यहारयत् । शतसूर्य्यं शतावर्त्तं शतबिन्दुशताक्षिमत् ॥ १३ ॥ अभेद्यकल्पं मत्स्यस्य राजा कवचमाहरत् । उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ॥ १४ ॥ सुवर्णपृष्ठं सूर्य्याभं सूर्य्यदत्तोऽभ्यहारयत् । दृढमायसगर्भञ्च श्वेतं वर्म शताक्षिमत् ॥ १५ ॥ विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्यहारयत् । शतशश्च तनुत्राणि यथास्वन्ते महारथाः ॥ १६ ॥ योत्स्यमाना अनह्यन्त देवरूपाः प्रहारिणः । सूपस्करेषु शुभ्रेषु महत्सु च महारथाः ॥ १७ ॥ पृथक् काञ्चनसन्नाहान् रथेष्वश्वानयोजयन् । सूर्य्यचन्द्रप्रतिकाशे रथे दिव्ये हिरण्मये ॥ १८ ॥ महानुभावो मत्स्यस्य ध्वज उच्छ्रिश्रिये तदा । अथान्यान् विविधाकारान् ध्वजान् हेमपरिष्कृतान् ॥ १९ ॥ यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन् । अथ मत्स्योऽब्रवीद्राजा शतानीकं जघन्यजम् ॥ २० ॥ कङ्कवल्लवगोपाला दामग्रन्थिश्च वीर्य्यवान् । युध्येयुरिति मे बुद्धिर्वर्त्तते नात्र संशयः ॥ २१ ॥ एतेषामपि दीयन्तां रथा ध्वजपताकिनः । कवचानि विचित्राणि दृढानि च मृदूनि च ॥ २२ ॥ प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च । वीराङ्गरूपाः पुरुषा नागराजकरोपमाः ॥ २३ ॥ नेमे जातु न युध्येयुरिति मे धीयते मतिः । एवं श्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः ॥ २४ ॥ शतानीकस्तु पार्थेभ्यो रथान् राजन् समादिशत् । सहदेवाय राज्ञे च भीमाय नकुलाय च ॥ २५ ॥ ते प्रहृष्टास्ततः सूता राजभक्तिपुरस्कृताः । निर्द्दिष्टा नरदेवेन रथान् शीघ्रमयोजयन् ॥ २६ ॥ कवचानि विचित्राणि मृदूनि च दृढानि च ।

यान्तु सहितास्तत्र विराटनगरं प्रति। क्षिप्रं गोपान् समासाद्य गृह्णन्तु विपुलं धनम् ॥ २५ ॥ गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च। वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम् ॥ २६ ॥

वैशम्पायन उवाच। ते स्म गत्वा यथोद्दिष्टां दिशं वह्नेर्महीपते। सन्नद्धा रथिनः सर्वे सपदाता बलोत्कटाः ॥ २७ ॥ प्रतिवैरं चिकीर्षन्तो गृध्रा महाबलाः। आदातुं गाः सुशर्माथ कृष्णपक्षस्य सप्तमीम् ॥ २८ ॥ अपरे दिवसे सर्वे राजन् संभूय कौरवाः। अष्टम्यान्ते न्यगृह्णन्त गोकुलानि सहस्रशः ॥ २९ ॥

इति विराटपर्वणि गोहरणपर्वणि सुशर्मादिमन्त्रे दिग्याने त्रिंशोऽध्यायः ॥ ३० ॥

---

वैशम्पायन उवाच। ततस्तेषां महाराज तत्रैवामिततेजसाम्। छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनाम् ॥ १ ॥ व्यतीतः समयः सम्यक् वसतां वै पुरोत्तमे। कुर्वतां तस्य कर्माणि विराटस्य महीपतेः ॥ २ ॥ कीचके तु हते राजा विराटः परवीरहा। परां सम्भावनाञ्चक्रे कुन्तीपुत्रेषु वीर्य्यवान् ॥ ३ ॥ ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत। सुशर्मणा गृहीतन्तद्गोधनं तरसा बहु ॥ ४ ॥ ततो जवेन महता गोपः पुरमथाव्रजत्। स दृष्ट्वा मत्स्यराजञ्च रथात् प्रस्कन्द्य कुण्डली ॥ ५ ॥ शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः। संवृतं मन्त्रिभिः सार्द्धं पाण्डवैश्च महात्मभिः ॥ ६ ॥ तं सभायां महाराजमासीनं राष्ट्रवर्द्धनम्। सोऽब्रवीदुपसङ्गम्य विराटं प्रणतस्तदा ॥ ७ ॥ अस्मान् युधि विनिर्ज्जित्य परिभूय सबान्धवान्। गवां शतसहस्राणि त्रिगर्त्ताः कालयन्ति ते ॥ ८ ॥ तान् परीप्सस्व राजेन्द्र मानेशुः पशवस्तव। तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत् ॥ ९ ॥ रथनागाश्वकलिलां पत्ति-

ध्वजसमाकुलाम् । राजानो राजपुत्राश्च तनुत्राण्यथ भेजिरे ॥ १० ॥
भानुमन्ति विचित्राणि शूरसेव्यानि भागशः । सवज्रायसगर्भन्तु
कवचं तत्र काञ्चनम् ॥ ११ ॥ विराटस्य प्रियो भ्राता शतानीको-
ऽभ्यहारयत् । सर्वपारशवं वर्म्म कल्याणपटलं दृढम् ॥ १२ ॥
शतानीकादवरजो मदिराश्वोऽभ्यहारयत् । शतसूर्य्यं शतावर्त्तं शत-
विन्दुशताक्षिमत् ॥ १३ ॥ अभेद्यकल्पं मत्स्यस्य राजा कवच-
माहरत् । उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ॥ १४ ॥
सुवर्णपृष्ठं सूर्य्याभं सूर्य्यदत्तोऽभ्यहारयत् । दृढमायसगर्भञ्च श्वेतं
वर्म्म शताक्षिमत् ॥ १५ ॥ विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्य-
हारयत् । शतशश्च तनुत्राणि यथास्वन्ते महारथाः ॥ १६ ॥
योत्स्यमाना अनह्यन्त देवरूपाः प्रहारिणः । सूपस्करेषु शुभ्रेषु
महत्सु च महारथाः ॥ १७ ॥ पृथक् काञ्चनसन्नाहान् रथेष्वश्वा-
नयोजयन् । सूर्य्यचन्द्रप्रतिकाशे रथे दिव्ये हिरण्मयि ॥ १८ ॥
महानुभावो मत्स्यस्य ध्वज उच्छ्रिश्रियि तदा । अथान्यान् विवि-
धाकारान् ध्वजान् हेमपरिष्कृतान् ॥ १९ ॥ यथास्वं क्षत्रियाः
शूरा रथेषु समयोजयन् । अथ मत्स्योऽब्रवीद्राजा शतानीकं
जघन्यजम् ॥ २० ॥ कङ्कबल्लवगोपाला दामग्रन्थिश्च वीर्य्यवान् ।
युध्येयुरिति मे बुद्धिर्वर्त्तते नात्र संशयः ॥ २१ ॥ एतेषामपि दीयन्तां
रथा ध्वजपताकिनः । कवचानि विचित्राणि दृढानि च मृदूनि
च ॥ २२ ॥ प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च । वीराङ्ग-
रूपाः पुरुषा नागराजकरोपमाः ॥ २३ ॥ नेमे जातु न युध्येयु-
रिति मे धीयते मतिः । एवं श्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः
॥ २४ ॥ शतानीकस्तु पार्थेभ्यो रथान् राजन् समादिशत् । सह-
देवाय राज्ञे च भीमाय नकुलाय च ॥ २५ ॥ ते प्रहृष्टास्ततः
सूता राजभक्तिपुरस्कृताः । निर्द्दिष्टा नरदेवेन रथान् शीघ्रमयो-
जयन् ॥ २६ ॥ कवचानि विचित्राणि मृदूनि च दृढानि च ।

विराटः प्राविशद्यानि तेषामक्लिष्टकर्मणाम् ॥ २७ ॥ तान्यामुच्य शरीरेषु दंशितास्ते परन्तपाः। रथान् हयैः सुसम्पन्नानास्थाय च नरोत्तमाः ॥ २८ ॥ निर्ययुर्मुदिताः पार्थाः शत्रुसङ्घावमर्द्दिनः। तरस्विनश्छन्नरूपा सर्वे युद्धविशारदाः ॥ २९ ॥ रथान् हेमपरिच्छन्नानास्थाय च महारथाः। विराटमन्वयुः पार्थाः सहिताः कुरुपुङ्गवाः ॥ ३० ॥ चत्वारो भ्रातरः शूराः पाण्डवाः सत्यविक्रमाः। भीमाश्च मत्तमातङ्गाः प्रभिन्नकरटामुखाः ॥ ३१ ॥ चरन्तश्चैव नागेन्द्रा सुदन्ताः षष्टिहायनाः। आरूढा युद्धकुशलैः शिक्षिता हस्तिसादिभि ॥ ३२ ॥ राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः। विशारदानां मुख्यानां हृष्टानाञ्चानुयायिनाम् ॥ ३३ ॥ अष्टौ रथसहस्राणि दशनागशतानि च। षष्टिश्चाश्वसहस्राणि मत्स्यानामभिनिर्ययुः ॥ ३४ ॥ तदनीकं विराटस्य शुशुभे भरतर्षभ। सम्प्रयान्तं तदा राजन्निरीक्षन्तं गवां पदम् ॥ ३५ ॥ तद्बलाग्र्यं विराटस्य सम्प्रस्थितमशोभत। दृढायुधजनाकीर्णं गजाश्वरथसङ्कुलम् ॥ ३६ ॥

इति विराटपर्वणि गोहरणपर्वणि मत्स्यराजरणोद्योगे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

वैशम्पायन उवाच। निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः। त्रिगर्त्तानस्पृशन्मत्स्याः सूर्य्ये परिणते सति ॥ १ ॥ ते त्रिगर्त्ताश्च मत्स्याश्च संरब्धा युद्धदुर्मदाः। अन्योऽन्यमभिगर्ज्जन्तो गोषु गृद्धा महाबलाः ॥ २ ॥ भीमाश्च मत्तमातङ्गास्तोमराङ्कुशचोदिताः। ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ॥ ३ ॥ तेषां समागमो घोरस्तुमुलो लोमहर्षणः। घ्नतां परस्परं राजन् यमराष्ट्रविवर्द्धनः ॥ ४ ॥ देवासुरसमो राजन्नासीत् सूर्य्येऽवल-

ष्यति । पदातिरथनागेन्द्रहयारोहबलौघवान् ॥ ५ ॥ अन्योऽन्यमभ्यापततां निघ्नतां चेतरेतरम् । उदतिष्ठद्रजो भौमं न प्राज्ञायत किञ्चन ॥ ६ ॥ पक्षिणश्चापतन् भूमौ सैन्येन रजसावृताः । इषुभिर्व्यतिसर्पद्भिरादित्योऽन्तरधीयत ॥ ७ ॥ खद्योतैरिव संयुक्तमन्तरीक्षं व्यराजत । रुक्मपृष्ठानि चापानि व्यतिषिक्तानि धन्विनाम् ॥ ८ ॥ पततां लोकवीराणां सव्यदक्षिणमस्यताम् । रथा रथैः समाजग्मुः पादातैश्च पदातयः ॥ ९ ॥ सादिनः सादिभिश्चैव गजैश्चापि महागजाः । असिभिः पट्टिशैः प्रासैः शक्तिभिस्तोमरैरपि ॥ १० ॥ संरब्धाः समरे राजन्निजघ्नुरितरेतरम् । निघ्नन्तः समरेऽन्योऽन्य शूराः परिघवाहवः ॥ ११ ॥ न शेकुरभिसंरब्धाः शूरान् कर्त्तुं पराङ्मुखान् । कृत्तोत्तरोष्ठं सुनसं कृत्तकेशमलङ्कृतम् ॥ १२ ॥ अदृश्यत शिरश्छिन्नं रजोध्वस्तं सकुण्डलम् । अदृश्यन्त च गात्राणि शरैश्छिन्नानि भागशः ॥ १३ ॥ शालस्कन्धनिकाशानि क्षत्रियाणां महामृधे । नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः ॥ १४ ॥ आस्तीर्णा वसुधा भाति शिरोभिश्च सकुण्डलैः । रथिनां रथिभिश्चात्र सम्प्रहारोऽभ्यवर्त्तत ॥ १५ ॥ सादिभिः सादिनाञ्चापि पदातीनां पदातिभि । उपाशाम्यद्रजो भौमं रुधिरेण प्रसर्पता ॥ १६ ॥ कश्मलञ्चाविशद्घोरं निर्मर्य्यादमवर्त्तत । उपाविशन् शकुन्तास्तः शरैर्गाढं प्रवेजिताः ॥ १७ ॥ अन्तरीक्षे गतिर्येषां दर्शनञ्चाप्यरुध्यत । ते घ्नन्तः समरेऽन्योऽन्यं शूराः परिघवाहव ॥ १८ ॥ न शेकुरतिसंरब्धः शूरान् कर्त्तुं पराङ्मुखान् । शतानीकः शतं हत्वा विशालाक्षश्चतु शतम् ॥ १९ ॥ प्रविष्टौ महतीं सेनां त्रिगर्त्तानां महारथौ । तौ प्रविष्टौ महासेनां बलवन्तौ मनस्विनौ ॥ २० ॥ आर्च्छतां बाहुसरम्भात् केशाकेशि रथारथि । लक्षयित्वा त्रिगर्त्तानां तौ प्रविष्टौ रथव्रजम् ॥ २१ ॥ अग्रतः सूर्य्यदत्तञ्च मदिराश्वञ्च पृष्ठतः । विराटस्तत्र संग्रामे हत्वा पञ्च शतान् रथान्

॥ २२ ॥ हत्वानाश्च शतान्यष्टौ हत्वा पञ्च महारथान्। चरन् स विविधान्मार्गान्रथेन रथसत्तमः ॥ २३ ॥ त्रिगर्त्तानां सुशर्माणमार्च्छद्रुक्मरथं रणे। तौ व्यवाहरतां तत्र महात्मानौ महाबलौ ॥ २४ ॥ अन्योऽन्यमभिगर्ज्जन्तौ गोष्ठेषु वृषभाविव। ततो राजा त्रिगर्त्तानां सुशर्मा युद्धदुर्मदः ॥ २५ ॥ मत्स्यं समीयाद्राजानं द्वैरथेन नरर्षभः। ततो रथाभ्यां रथिनौ व्यतीयतुरमर्षणौ ॥ २६ ॥ शरान् व्यसृजतां शीघ्रं तोयधारा घनाविव। अन्योऽन्यं चापि संरब्धौ विचेरतुरमर्षणौ ॥ २७ ॥ कृतास्त्रौ निशितैर्वाणैरसिशक्तिगदाभृतौ। ततो राजासुशर्माणं विव्याध दशभिः शरैः ॥ २८ ॥ पञ्चभिः पञ्चभिश्चास्य विव्याध चतुरो हयान्। तथैव मत्स्यराजानं सुशर्मा युद्धदुर्मदः ॥ २९ ॥ पञ्चाशद्भिः शितैर्वाणैर्विव्याध परमास्त्रवित्। ततः सैन्यं महाराज मत्स्यराजसुशर्मणोः। नाभ्यजानत्तदान्योऽन्यं सैन्येन रजसा वृतम् ॥ ३० ॥

इति विराटपर्वणि गोहरणपर्वणि सुशर्मविराटयुद्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

वैशम्पायन उवाच। तमसाभिप्लुते लोके रजसा चैव भारत। अतिष्ठन्वै मुहूर्त्तन्तु व्यूढानीकाः प्रहारिणः ॥ १ ॥ ततोऽन्धकारं प्रणुदन्नुदतिष्ठत चन्द्रमाः। कुर्वाणो विमलां रात्रिं नन्दयन् क्षत्रियान् युधि ॥ २ ॥ ततः प्रकाशमासाद्य पुनर्युद्धमवर्त्तत। घोररूपं ततस्तस्मिन् नावैक्षन्त परस्परम् ॥ ३ ॥ ततः सुशर्मा त्रैगर्त्तः सह भ्रात्रा यवीयसा। अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥४॥ ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्रियर्षभौ। गदापाणी सुसंरब्धौ समभ्यद्रवतां रथान् ॥ ५ ॥ तथैव तेषान्तु बलानि तानि क्रुद्धान्यथान्योऽन्यमभिद्रवन्ति। गदासिखड्गैश्च परश्वधैश्च प्रासैश्च

तीक्ष्णाग्रसुपीतधारैः ॥ ६ ॥ बलन्तु मत्स्यस्य बलेन राजा सर्वं त्रिगर्त्ताधिपतिः सुशर्म्मा। प्रमथ्य जित्वा च प्रसह्य मत्स्यं विराट-मोजस्विनमभ्यधावत् ॥ ७ ॥ तौ निहत्य पृथग्धूर्य्यावुभौ तौ पार्ष्णिसारथी। विरथं मत्स्यराजानं जीवग्राहमगृह्णताम् ॥ ८ ॥ तमुन्मथ्य सुशर्म्माथ युवतीमिव कामुकः। स्यन्दनं स्वं समारोप्य प्रययौ शीघ्रवाहनः ॥ ९ ॥ तस्मिन् गृहीते विरथे विराटे बल-वत्तरे। प्राद्रवन्त भयात् मत्स्यास्त्रिगर्त्तैरर्द्दिता भृशम् ॥ १० ॥ तेषु सन्त्रास्यमानेषु कुन्तीपुत्रो युधिष्ठिरः। प्रत्यभाषन्महाबाहुं भीमसेनमरिन्दमम् ॥ ११ ॥ मत्स्यराजः परामृष्टस्त्रिगर्त्तेन सुश-र्म्मणा। तं मोचय महाबाहो न गच्छेद्द्विषतां वशम् ॥ १२ ॥ उषिताः स्म सुखं सर्व्वे सर्व्वकामैः सुपूजिताः। भीमसेन त्वया कार्य्या तस्य वासस्य निष्कृतिः ॥ १३ ॥

भीमसेन उवाच। अहमेनं परित्रास्ये शासनात्तव पार्थिव। पश्य मे सुमहत्कर्म्म युध्यतः सह शत्रुभिः ॥ १४ ॥ स्वबाहुबल-माश्रित्य तिष्ठ त्वं भ्रातृभिः सह। एकान्तमाश्रितो राजन् पश्य मेऽद्य पराक्रमम् ॥ १५ ॥ सुस्कन्धोऽयं महावृक्षो गदारूप इव स्थितः। एनमेव समारुह्य द्रावयिष्यामि शात्रवान् ॥ १६ ॥

वैशम्पायन उवाच। तं मत्तमिव मातङ्गं वीक्षमाणं वन-स्पतिम्। अब्रवीद्भ्रातरं वीरं धर्म्मराजो युधिष्ठिरः ॥ १७ ॥ मा भीम साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः। मा त्वां वृक्षेण कर्म्माणि कुर्व्वाणमतिमानुषम् ॥ १८ ॥ जनाः समवबुध्येरन् भीमोऽयमिति भारत। अन्यदेवायुधं किञ्चित् प्रतिपद्यस्व मानुषम् ॥ १९ ॥ चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वधम्। यदेव मानुषं भीम भवेदन्यैरलक्षितम् ॥ २० ॥ तदेवायुधमादाय मोक्षयाशु मही-पतिम्। यमौ च चक्ररक्षौ ते भवितारौ महाबलौ। सहिताः समरे तत्र मत्स्यराजं परीप्सत ॥ २१ ॥

वैशम्पायन उवाच। एवमुक्तस्तु वेगेन भीमसेनो महाबलः
गृहीत्वा तु धनुः श्रेष्ठं जवेन सुमहाजवः ॥ २२ ॥ व्यमुञ्चच्छर
वर्षाणि सतोय इव तोयदः। तं भीमो भीमकर्माणं सुशर्माणमथा
द्रवत् ॥ २३ ॥ विराटं समवीक्ष्यैनं तिष्ठतिष्ठेति चाब्रवीत्। सुशर्म
चिन्तयामास कालान्तकयमोपमम् ॥ २४ ॥ तिष्ठतिष्ठेति भाषन्त
पृष्ठतो रथपुङ्गवः। पश्यतां सुमहत् कर्म्म महद्युद्धमुपस्थितम् ॥२५॥
परावृत्तो धनुर्गृह्य सुशर्मा भ्रातृभिः सह। निमेषान्तरमात्रेण
भीमसेनेन ते रथाः ॥ २६ ॥ रथानाञ्च गजानाञ्च वाजिनाञ्च
ससादिनाम्। सहस्रशतसङ्घाताः शूराणामुग्रधन्विनाम्। पातिता
भीमसेनेन विराटस्य समीपत ॥ २७ ॥ पत्तयो निहतास्तेषां गदां
गृह्य महात्मना। तद्दृष्ट्वा तादृशं युद्धं सुशर्मा युद्धदुर्मदः ॥ २८ ॥
चिन्तयामास मनसा किं शेषं हि बलस्य मे। अपरो दृश्यते सैन्ये
पुरा मग्नो महाबले ॥ २९ ॥ आकर्णपूर्णेन तदा धनुषा प्रत्य-
दृश्यत। सुशर्मा सायकांस्तीक्ष्णान् क्षिपते च पुनः पुनः ॥ ३० ॥
ततः समस्तास्ते सर्वे तुरगानभ्यचोदयन्। दिव्यमस्त्रं विकुर्वाणा-
स्त्रिगर्त्तान् प्रत्यमर्षणाः ॥ ३१ ॥ तान्निवृत्तरथान् दृष्ट्वा पाण्डवान्
सा महाचमूः। वैराटिः परमक्रुद्धो युयुधे परमाद्भुतम् ॥ ३२ ॥
सहस्रमवधीत्तत्र कुन्तीपुत्रो युधिष्ठिरः। भीमः सप्त सहस्राणि
यमलोकमदर्शयत् ॥ ३३ ॥ नकुलश्चापि सप्तैव शतानि प्राहिणो-
च्छरैः। शतानि त्रीणि शूराणां सहदेवः प्रतापवान् ॥ ३४ ॥
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः। ततोऽभ्यपतदत्युग्र सुश-
र्माणमुद्यतायुधः। हत्वा तां महतीं सेनां त्रिगर्त्तानां महारथः ॥३५॥
ततो युधिष्ठिरो राजा त्वरमाणो महारथः। अभिपत्य सुशर्माणं
शरैरभ्याहनद्भृशम् ॥ ३६ ॥ सुशर्मापि सुसंरब्धस्त्वरमाणो युधि-
ष्ठिरम् ॥ १० ॥ अविध्यन्नवभिर्बाणैश्चतुर्भिश्चतुरो हयान्। ततो
राजन्नाशुकारी कुन्तीपुत्रो वृकोदरः ॥ ३८ ॥ समासाद्य सुशर्माण-

मश्वानस्य व्यपोथयत्। पृष्ठगोपांश्च तस्याथ हत्वा परमसायकैः ॥ ३९ ॥ अथास्य सारथिं क्रुद्धो रथोपस्थादपातयत्। चक्ररक्षश्च शूरो वै मदिराक्षोऽतिविश्रुतः ॥ ४० ॥ समायाद्विरथं दृष्ट्वा त्रिगर्त्तं प्राहरत्तदा। ततो विराटः प्रस्कन्द्य रथादथ सुशर्म्मणः ॥४१॥ गदां तस्य परामृश्य तमेवाभ्यद्रवद्बली। स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ॥ ४२ ॥ पलायमानं त्रैगर्त्तं दृष्ट्वा भीमोऽभ्यभाषत। राजपुत्र निवर्त्तस्व न ते युक्तं पलायनम् ॥ ४३ ॥ अनेन वीर्य्येण कथं गास्त्वं प्रार्थयसे बलात्। कथं चानुचरांस्त्यक्त्वा शत्रुमध्ये विषीदसि ॥ ४४ ॥ इत्युक्तः स तु पार्थेन सुशर्म्मा रथयूथपः। तिष्ठतिष्ठेति भीमं स सहसाभ्यद्रवद्बली ॥ ४५ ॥ भीमस्तु भीमसङ्काशो रथात् प्रस्कन्द्य पाण्डवः। प्राद्रवत्तूर्णमव्यग्रो जीवितेप्सुः सुशर्म्मणः ॥ ४६ ॥ तं भीमसेनो धावन्तमभ्यधावत वीर्य्यवान्। त्रिगर्त्तराजमादातुं सिंहः क्षुद्रमृगं यथा ॥ ४७ ॥ अभिद्रुत्य सुशर्म्माणं केशपक्षे परामृशत्। समुद्यम्य तु रोषात्तं निष्पिपेष महीतले ॥ ४८ ॥ पदा मूर्द्ध्नि महाबाहुः प्राहरद्विलपिष्यतः। तस्य जानु ददौ भीमो जघ्ने चैनमरत्निना ॥ ४९ ॥ स मोहमगमद्राजा प्रहारवरपीड़ितः। तस्मिन् गृहीते विरथे त्रिगर्त्तानां महारथे ॥ ५० ॥ अभज्यत बलं सर्वं त्रैगर्त्तं तद्भयातुरम्। निवर्त्त्य गास्ततः सर्वाः पाण्डुपुत्रा महारथाः ॥ ५१ ॥ अवजित्य सुशर्म्माणं धनं चादाय सर्वशः। स्वबाहुबलसम्पन्ना ह्रीनिषेवा यतव्रताः ॥ ५२ ॥ विराटस्य महात्मनः परिक्लेशविनाशनाः। स्थिताः समक्षं ते सर्वे त्वथ भीमोऽभ्यभाषत ॥ ५३ ॥ नायं पापसमाचारो मत्तो जीवितुमर्हति। किन्तु शक्यं मया कर्त्तुं यद्राजा सततं घृणी ॥ ५४ ॥ गले गृहीत्वा राजानमानीय विवशं वशम्। तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ॥ ५५ ॥ रथमारोपयामास विसंज्ञं पांशुगुण्ठितम्। अभ्येत्य रणमध्यस्थमभ्यगच्छद्युधिष्ठिरम्

॥ ५६ ॥ दर्शयामास भीमस्तु सुशर्माणं नराधिपम् । प्रोवाच पुरुषव्याघ्रो भीममाहवशोभिनम् ॥ ५७ ॥ तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः । एवमुक्तोऽब्रवीद्भीमः सुशर्माणं महाबलम् ॥ ५८ ॥

भीम उवाच । जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ॥ ५९ ॥ एवन्ते जीवितं दद्यामेष युद्धजितो विधिः । तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ॥ ६० ॥

युधिष्ठिर उवाच । मुञ्च मुञ्चाधमाचारं प्रमाणं यदि ते वयम् । दासभावं गतो ह्येष विराटस्य महीपतेः । अदासो गच्छ मुक्तोऽसि मैवं कार्षीः कदाचन ॥ ६१ ॥

इति विराटपर्वणि गोहरणपर्वणि सुशर्मनिग्रहे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

वैशम्पायन उवाच । एवमुक्ते तु सव्रीडः सुशर्मासीदधोमुखः । स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ॥ १ ॥ विसृज्य तु सुशर्माणं पाण्डवास्ते हतद्विषः । स्वबाहुबलसम्पन्ना ह्रीनिषेवा यतव्रताः ॥ २ ॥ संग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् । ततो विराटः कौन्तेयानतिमानुषविक्रमान् । अर्चयामास वित्तेन मानेन च महारथान् ॥ ३ ॥

विराट उवाच । यथैव मम रत्नानि युष्माकं तानि वै तथा । कार्य्यं कुरुत वै सर्वं यथाकामं यथासुखम् ॥ ४ ॥ ददाम्यलङ्कृताः कन्या वसूनि विविधानि च । मनसश्चाप्यभिप्रेतं युद्धे शत्रुनिवर्हणाः ॥ ५ ॥ युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह । तस्माद्भवन्तो मत्स्यानामीश्वराः सर्व एव हि ॥ ६ ॥

वैशम्पायन उवाच । तथेतिवादिनं मत्स्यं कौरवेयाः पृथक् पृथक् । ऊचुः प्राञ्जलयः सर्वे युधिष्ठिरपुरोगमाः ॥ ७ ॥ प्रतिनन्दाम ते वाक्यं सर्वञ्चैव विशाम्पते । एतेनैव प्रतीताः स्म यत्त्वं मुक्तोऽद्य शत्रुभिः ॥ ८ ॥ ततोऽब्रवीत् प्रीतमना मत्स्यराजो युधिष्ठिरम् । पुनरेव महाबाहुर्विराटो राजसत्तमः ॥ ९ ॥ एहि त्वामभिषेक्ष्यामि मत्स्यराजस्तु नो भवान् । मनसश्चाप्यभिप्रेतं यथेष्टं भुवि दुर्लभम् ॥ १० ॥ तत्तेऽहं सम्प्रदास्यामि सर्वमर्हति नो भवान् । रत्नानि गाः सुवर्णञ्च मणिमुक्तमथापि च ॥ ११ ॥ वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोऽस्तु ते । त्वत्कृते ह्यद्य पश्यामि राज्यं सन्तानमेव च ॥ १२ ॥ यतश्च जातसंरम्भो न च शत्रुवशङ्गतः ततो युधिष्ठिरो मत्स्यं पुनरेवाभ्यभाषत ॥ १३ ॥ प्रतिनन्दामि ते वाक्यं मनोज्ञं मत्स्य भाषसे । आनृशंस्यपरो नित्यं सुसुखी सततं भव ॥ १४ ॥ गच्छन्तु दूतास्त्वरितं नगरं तव पार्थिव । सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ १५ ॥ ततस्तद्वचनान्मत्स्यो दूतान् राजा समादिशत् । आचक्षध्वं पुरं गत्वा संग्रामे विजयं मम ॥ १६ ॥ कुमार्य्यः समलङ्कृत्य पर्य्यागच्छन्तु मे पुरात् । वादित्राणि च सर्वाणि गणिकाश्च स्वलङ्कृताः ॥ १७ ॥ एताञ्चाज्ञां ततः श्रुत्वा राज्ञा मत्स्येन चोदिताः । तामाज्ञां शिरसा कृत्वा प्रस्थिता हृष्टमानसाः ॥ १८ ॥ ते गत्वा तत्र तां रात्रिमथ सूर्य्योदयं प्रति । विराटस्य पुराभ्याशे दूता जयमघोषयन् ॥ १९ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि विराटजयघोषे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

वैशम्पायन उवाच । याते त्रिगर्त्ते मत्स्ये तु पशूंस्तान् वै परीप्सति । दुर्योधनः सहामात्यो विराटमुपयादथ ॥ १ ॥ भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित् । द्रौणिश्च सौबलश्चैव तथा दुःशासनः प्रभो ॥ २ ॥ विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्य्यवान् । दुर्मुखो दुःसहश्चैव ये चैवान्ये महारथाः ॥ ३ ॥ एते मत्स्यमुपागम्य विराटस्य महीपतेः । घोषान् विद्राव्य तरसा गोधनं जह्रुरोजसा ॥ ४ ॥ षष्टिं गवां सहस्राणि कुरवः कालयन्ति च । महता रथवंशेन परिवार्य्य समन्ततः ॥ ५ ॥ गोपालानान्तु घोषस्य हन्यतां तैर्महारथैः । आरावः सुमहानासीत् सम्प्रहारे भयङ्करे ॥ ६ ॥ गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः । जगाम नगरायैव परिक्रोशंस्तदार्त्तवत् ॥ ७ ॥ संप्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः । अवतीर्य्य रथात्तूर्णमाख्यातुं प्रविवेश ह ॥ ८ ॥ दृष्ट्वा भूमिञ्जयं नाम पुत्रं मत्स्यस्य मानिनम् । तस्मै तत् सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ ९ ॥ षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते । तद्विजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्द्धन ॥ १० ॥ राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि च स्वयम् । त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ॥ ११ ॥ त्वया परिषदो मध्ये श्लाघते स नराधिपः । पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः ॥ १२ ॥ इष्वस्त्रे निपुणो योधः सदा वीरश्च मे सुतः । तस्य तत्सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् ॥ १३ ॥ आवर्त्तय कुरून् जित्वा पशून् पशुमताम्वर । निर्द्दहैषामनीकानि भीमेन शरतेजसा ॥ १४ ॥ धनुश्च्युतै रुक्मपुङ्खैः शरैः सन्नतपर्वभिः । द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ॥ १५ ॥ पाशोपधानां ज्यातन्त्रीञ्चापदण्डां महास्वनाम् । शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय ॥ १६ ॥ श्वेता रजतसङ्काशा रथे युज्यन्तु ते हयाः । ध्वजञ्च सिंहसौवर्णमुच्छ्रयन्तु तव प्रभो ॥ १७ ॥ रुक्मपुङ्खाः प्रस-

ज्याग्रा मुक्ता हस्तवता त्वया । छादयन्तु शराः सूर्य्यं राजां मार्गनिरोधकाः ॥ १८ ॥ रणे जित्वा कुरून् सर्वान् वज्रपाणिरिवासुरान् । यशो महदवाप्य त्वं प्रविशेदं पुरं पुनः ॥ १९ ॥ त्वं हि राष्ट्रस्य परमा गतिर्मत्स्यपतेः सुतः । यथा हि पाण्डुपुत्राणामर्जुनो जयतां वरः ॥ २० ॥ एवमेव गतिर्नूनं भवान् विषयवासिनाम् । गतिमन्तो भवन्त्वद्य सर्वे विषयवासिनः ॥ २१ ॥

वैशम्पायन उवाच । स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयङ्करम् । अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ॥ २२ ॥

इति विराटपर्वणि गोहरणपर्वणि उत्तरप्रशंसायां पञ्चविंशोऽध्यायः ॥ २५ ॥

---

उत्तर उवाच । अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् । यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः ॥ १ ॥ तन्त्वहं नावगच्छामि यो मे यन्ता भवेन्नरः । पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयास्यतः ॥ २ ॥ अष्टाविंशतिरात्रं वा मासं वा नूनमन्ततः । यत्तदासीन्महद्युद्धं तत्र मे सारथिर्हतः ॥ ३ ॥ स लभेयं यदा त्वन्यं हययानविदं नरम् । त्वरावानद्य यात्वाहं समुच्छ्रितमहाध्वजम् ॥ ४ ॥ विगाह्य तत् परानीकं गजवाजिरथाकुलम् । शस्त्रप्रतापनिर्वीर्य्यान् कुरून् जित्वानये पशून् ॥ ५ ॥ दुर्य्योधनं शान्तनवं कर्णं वैकर्त्तनं कृपम् । द्रोणञ्च सहपुत्रेण महेष्वासान् समागतान् ॥ ६ ॥ वित्रासयित्वा संग्रामे दानवानिव वज्रभृत् । अनेन मुहूर्त्तेन पुनः प्रत्यानये पशून् ॥ ७ ॥ शून्यमासाद्य कुरवः प्रयान्त्यादाय गोधनम् । किन्नु शक्यं मया कर्त्तुं यदहं तत्र

माभवम् ॥ ८ ॥ पश्येयुरद्य मे वीर्य्यं कुरवस्ते समागताः। किन्तु पार्थोऽर्जुन. साक्षादयमस्मान् प्रबाधते ॥ ९ ॥

वैशम्पायन उवाच। श्रुत्वा तदर्जुनो वाक्यं राज्ञः पुत्रस्य भाषतः। अतीतः समये काले प्रियां पार्थामनिन्दिताम् ॥ १० ॥ द्रुपदस्य सुतान्तन्वीं पाञ्चालीं पावकात्मजाम्। सत्यार्जवगुणोपेतां भर्त्तुः प्रियहिते रताम् ॥ ११ ॥ उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः। उत्तरं ब्रूहि कल्याणि क्षिप्र मद्वचनादिदम् ॥ १२ ॥ अयं वै पाण्डवस्यासीत् सारथिः सम्मतो दृढः। महायुद्धेषु संसिद्धः स ते यन्ता भविष्यति ॥ १३ ॥

वैशम्पायन उवाच। तस्य तद्वचनं स्त्रीषु भाषतश्च पुनः पुनः। न सामर्षत पाञ्चाली बीभत्सोः परिकीर्त्तनम् ॥ २४ ॥ अथैनमुपसङ्गम्य स्त्रीमध्यात् सा तपस्विनी। व्रीड़मानेव शनकैरिदं वचनमब्रवीत् ॥ १५ ॥ योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः। बृहन्नलेति विख्यातः पार्थस्यासीत् स सारथि ॥ १६ ॥ धनुष्मनवरश्चासीत्तस्य शिष्यो महात्मनः। दृष्टपूर्वो मया वीर चरन्त्या पाण्डवान् प्रति ॥ १७ ॥ यदा तत् पावको दावमदहत् खाण्डवं वनम्। अर्जुनस्य तदानेन संगृहीता हयोत्तमाः ॥ १८ ॥ तेन सारथिना पार्थः सर्वभूतानि सर्वशः। अजयत् खाण्डवप्रस्थे न हि यन्तास्ति तादृशः ॥ १९ ॥

उत्तर उवाच। सैरिन्ध्रि जानासि तथा युवानं नपुंसको नैव भवेद्यथासौ। अहं न शक्नोमि बृहन्नलां शुभे वक्तुं स्वयं यतृश्च हयान्ममेति वै ॥ २० ॥

द्रौपद्युवाच। येयं कुमारी सुश्रोणी भगिनी ते यवीयसी। अस्याः स वीर वचनं करिष्यति न संशयः ॥ २१ ॥ यदि वै सारथिः स स्यात् कुरून् सर्वान्न संशयः। जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ॥ २२ ॥ एवमुक्तः स सैरिन्ध्र्या भगिनीं

प्रत्यभाषत। गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलाम् ॥ २३ ॥
सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्त्तनागृहम्। यत्रास्ते स महा-
बाहुश्छन्नः सत्रेण पाण्डवः ॥ २४ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि बृहन्नलासारथ्यकथने
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

वैशम्पायन उवाच। सा प्राद्रवत्काञ्चनमाल्यधारिणी ज्येष्ठेन
भ्रात्रा प्रहिता यशस्विनी। सुदक्षिणा वेदिविलग्नमध्या सा पद्म-
पत्राभनिभा शिखण्डिनी ॥ १ ॥ तन्वी शुभाङ्गी मणिचित्रमेखला
मत्स्यस्य राज्ञो दुहिता श्रियावृता। तन्नर्त्तनागारमरालपक्ष्मा
शतह्रदा मेघमिवाभ्यपद्यत ॥ २ ॥ सा हस्तिहस्तोपमसंहतोरु-
रनिन्दिता चारुदती सुमध्यमा। आसाद्य तं वै वरमाल्यधारिणी
पार्थं शुभा नागवधूरिव द्विपम् ॥ ३ ॥ सा रत्नभूता मनसः प्रिया-
र्चिता सुता विराटस्य यथेन्द्रलक्ष्मीः। सुदर्शनीया प्रमुखे यश-
स्विनी प्रीत्याब्रवीदर्जुनमायतेक्षणा ॥ ४ ॥ सुसंहतोरुं कनको-
ज्ज्वलत्वचं पार्थः कुमारीं स तदाभ्यभाषत। किमागमः काञ्चन-
माल्यधारिणी मृगाक्षि किन्तु त्वरितेव भाविनी। किं ते मुखं
सुन्दरि नप्रसन्नमाचक्ष्व तत्त्वं मम शीघ्रमङ्गने ॥ ५ ॥

वैशम्पायन उवाच। स तां दृष्ट्वा विशालाक्षीं राजपुत्रीं सखीं
सखा। प्रहसन्नब्रवीद्राजन् किमागमनमित्युत ॥ ६ ॥ तमब्रवी-
द्राजपुत्री समुपेत्य नरर्षभम्। प्रणयम्भावयन्ती सा सखीमध्य इदं
वचः ॥ ७ ॥ गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नले। तान्
विजेतुं मम भ्राता प्रयास्यति धनुर्द्धरः ॥ ८ ॥ न चिरं निहतस्तस्य
सङ्ग्रामे रथसारथिः। तेन नास्ति समः सूतो योऽस्य सारथ्य-
माचरेत् ॥ ९ ॥ तस्मै प्रयतमानाय सारथ्यार्थं बृहन्नले। आच-

यद्वै हयज्ञाने सैरिन्ध्री कौशलं तव ॥ १० ॥ अर्जुनस्य किला-
सीस्त्वं सारथिर्दयितः पुरा। त्वयाजयत् सहायेन पृथिवीं पाण्डव-
र्षभः। सा सारथ्यं मम भ्रातुः कुरु साधु बृहन्नले ॥ ११ ॥
दूराद्दूरतरं गावो ह्रियन्ते कुरुभिर्हि नः। अथैतद्वचनं मेऽद्य
नियुक्ता न करिष्यसि ॥ १२ ॥ प्रणयादुच्यमाना त्वं परित्यक्ष्यामि
जीवितम्। एवमुक्तस्तु सुश्रोण्या तया सख्या परन्तपः ॥ १३ ॥
जगाम राजपुत्रस्य सकाशममितौजसः। तमाव्रजन्तं त्वरितं प्रभिन्न-
मिव कुञ्जरम् ॥ १४ ॥ अन्वगच्छद्विशालाक्षी शिशुं गजवधूरिव।
दूरादेव तु तं प्रेक्ष्य राजपुत्रोऽभ्यभाषत ॥ १५ ॥ त्वया सारथिना
पार्थः खाण्डवेऽग्निमतर्पयत्। पृथिवीमजयत् कृत्स्नां कुन्तीपुत्रो
धनञ्जयः ॥ १६ ॥ सैरिन्ध्री त्वां समाचष्टे सा हि जानाति पाण्ड-
वान्। संयच्छ मामकानश्वांस्तथैव त्वं बृहन्नले ॥ १७ ॥ कुरुभि-
र्योत्स्यमानस्य गोधनानि परीप्सतः। अर्जुनस्य किलासीस्त्वं
सारथिर्दयितः पुरा ॥ १८ ॥ त्वयाजयत्सहायेन पृथिवीं पाण्डव-
र्षभः। एवमुक्ता प्रत्युवाच राजपुत्रं बृहन्नला ॥ १९ ॥ का शक्ति-
र्मम सारथ्यं कर्त्तुं संग्राममूर्द्धनि। गीतं वा यदि वा नृत्यं वादित्रं
वा पृथग्विधम्। तत्करिष्यामि भद्रन्ते सारथ्यं तु कुतो मम ॥२०॥

उत्तर उवाच। बृहन्नले गायनो वा नर्त्तनो वा पुनर्भव।
क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान् ॥ २१ ॥

वैशम्पायन उवाच। स तत्र नर्मसंयुक्तमकरोत् पाण्डवो बहु।
उत्तरायाः प्रमुखतः सर्वं जानन्नरिन्दम ॥ २२ ॥ ऊर्द्धमुत्क्षिप्य
कवचं शरीरे प्रत्यमुञ्चत। कुमार्यस्तत्र तं दृष्ट्वा प्राहसन् पृथु-
लोचनाः ॥ २३ ॥ स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्ततः। कव-
चेन महार्हेण समनह्यद्बृहन्नलाम् ॥ २४ ॥ स बिभ्रत् कवचञ्चाग्र्यं
स्वयमप्यंशुमत्तरम्। ध्वजञ्च सिंहमुच्छ्रित्य सारथ्ये समकल्पयत्
॥ २५ ॥ धनूंषि च महार्हाणि बाणांश्च रुचिरान् बहून्। आदाय

ययौ वीर स वृहन्नलसारथि ॥ २६ ॥ अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा । वृहन्नले आनयेथा वासांसि रुचिराणि च ॥ २७ ॥ पाञ्चालिकार्थं चित्राणि सूक्ष्माणि च मृदूनि च । विजित्य संग्रामगतान् भीष्मद्रोणमुखान् कुरुन् ॥ २८ ॥ एवं ता ब्रुवतीः कन्याः सहिता पाण्डुनन्दनः । प्रत्युवाच हसन् पार्थो मेघदुन्दुभिनिस्वनः ॥ २९ ॥

वृहन्नलोवाच । यद्युत्तरोऽयं संग्रामे विजेष्यति महारथान् । अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च ॥ ३० ॥

वैशम्पायन उवाच । एवमुक्त्वा तु बीभत्सुस्ततः प्राचोदयद्धयान् । कुरूनभिमुख शूरो नानाध्वजपताकिनः ॥ ३१ ॥ तमुत्तरं वीक्ष्य रथोत्तमे स्थितं वृहन्नलया सहितं महाभुजम् । स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः प्रदक्षिणं चक्ररथोचुरङ्गनाः ॥ ३२ ॥ यदर्जुनस्यर्षभतुल्यगामिनः पुराभवत खाण्डवदाहमङ्गलम् । कुरून् समासाद्य रणे वृहन्नले सहोत्तरेणाद्य तदस्तु मङ्गलम् ॥ ३३ ॥

इति विराटपर्वणि गोहरणपर्वणि उत्तरनिर्याणे सप्तत्रिंशोऽध्याय ॥ ३७ ॥

---

वैशम्पायन उवाच । स राजधान्या निर्याय वैराटिरकुतोभयः । प्रयाहीत्यब्रवीत सूत यत्र ते कुरवो गता ॥ १ ॥ समवेतान् कुरून् सर्वान् जिगीषूनवजित्य वै । गास्तेषां क्षिप्रमादाय पुनरेष्याम्यहं पुरम् ॥ २ ॥ ततस्तांश्चोदयामास सदश्वान् पाण्डुनन्दनः । ते हया नरसिंहेन चोदिता वातरंहस ॥ ३ ॥ आलिखन्त इवाकाशमूह्‌ काञ्चनमालिनः । नातिदूरमथो गत्वा मत्स्यपुत्रधनञ्जयौ ॥ ४ ॥ अवेक्षेतामर्मित्रघ्नौ कुरूणाम्बलिना बलम् । श्मशानमभितो गत्वा आससाद कुरूनथ ॥ ५ ॥ तां शमीमन्व-

चौच्चैतां व्यूढानीकांश्च सर्वशः। तदनीकं महत्तेषां विबभौ सागरोपमम् ॥ ६ ॥ सर्पमाणमिवाकाशे वनं बहुलपादपम्। ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ॥ ७ ॥ दृष्टिप्रणाशो भूतानां दिवस्पृक् कुरुसत्तम। तदनीकं महद्दृष्ट्वा गजाश्वरथसङ्कुलम् ॥ ८ ॥ कर्णदुर्योधनकृतैर्गुप्तं शान्तनवेन च। द्रोणेन च सपुत्रेण महेष्वासेन धीमता। हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ॥९॥

उत्तर उवाच। नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे। बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ॥ १० ॥ प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनन्तकम्। नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ॥ ११ ॥ रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम्। दृष्ट्वैव हि परानाजौ मनः प्रव्यथतीव मे ॥ १२ ॥ यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः। अश्वत्थामा विकर्णश्च सोमदत्तश्च वाह्लिकः ॥ १३ ॥ दुर्योधनस्तथा वीरो राजा च रथिनां वरः। द्युतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ॥ १४ ॥ दृष्ट्वैव हि कुरूनेतान् व्यूढानीकान् प्रहारिणः। हृषितानि च रोमाणि कश्मलञ्चागतं मम ॥ १५ ॥

वैशम्पायन उवाच। अविज्ञातो विजातस्य मौर्ख्याद्धूर्त्तस्य पश्यतः। परिदेवयते मन्दः सकाशे सव्यसाचिनः ॥ १६ ॥ त्रिगर्त्तान्मे पिता यातः शून्ये सम्प्रणिधाय माम्। सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः ॥ १७ ॥ सोऽहमेको बहून् बालः कृतास्त्रानकृतश्रमः। प्रतियोद्धुं न शक्ष्यामि निवर्त्तस्व बृहन्नले ॥ १८ ॥

बृहन्नलोवाच। भयेन दीनरूपोऽसि द्विषतां हर्षवर्द्धनः। न च तावत् कृतं कर्म परैः किञ्चित् रणाजिरे ॥ १९ ॥ स्वयमेव च मामात्थ वह मां कौरवान् प्रति। सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ २० ॥ मध्यमामिषवद्गृध्राणां कुरूणा-

मातताविनाम्। नेष्यामि त्वां महाबाहो पृथिव्यामपि युध्यताम् ॥२१॥ तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च। कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे ॥ २२ ॥ न चेद्विजित्य गास्तास्त्वं गृहान् वै प्रतियास्यसि। प्रहसिष्यन्ति वीर त्वां नरा नार्यश्च सङ्गताः ॥ २३॥ अहमप्यत्र सैरिन्ध्र्या ख्यातः सारथ्यकर्मणि। न च शक्ष्याम्य-निर्जित्य गाः प्रयातुं पुरं प्रति ॥ २४ ॥ स्तोत्रेण चैव सैरिन्ध्र्या-स्तव वाक्येन तेन च। कथं न युध्येयमहं कुरून् सर्वान् स्थिरो भव ॥ २५ ॥

उत्तर उवाच। कामं हरन्तु मत्स्यानां भूयांसः कुरवो धनम्। प्रहसन्तु च मां नार्यो नरा वापि बृहन्नले ॥ २६ ॥ संग्रामे न च कार्य्यं मे गावो गच्छन्तु चापि मे। शून्यं मे नगरञ्चापि पितुश्चैव बिभेम्यहम् ॥ २७ ॥

वैशम्पायन उवाच। एत्युक्त्वा प्राद्रवद्भीतो रथात् प्रस्कन्द्य कुण्डली। त्यक्त्वा मानं च दर्पञ्च विसृज्य सशरन्धनु ॥ २८ ॥

बृहन्नलोवाच। नैष शूरैः स्मृतो धर्मः क्षत्रियस्य पलायनम्। श्रेयस्तु मरणं युद्धे न भीतस्य पलायनम् ॥ २९ ॥

वैशम्पायन उवाच। एवमुक्त्वा तु कौन्तेय सोऽवप्लुत्य रथो-त्तमात्। तमन्वधावद्धावन्तं राजपुत्रं धनञ्जयः ॥ ३० ॥ दीर्घां वेणीं विधुन्वानः साधुरक्ते च वाससी। विधूय वेणीं धावन्त-मजानन्तोऽर्जुनं तदा ॥ ३१ ॥ सैनिकाः प्राहसन् केचित्तथारूप-मवेक्ष्य तम्। तं शीघ्रमभिधावन्तं सम्प्रेक्ष्य कुरवोऽब्रुवन् ॥ ३२ ॥ क एष वेशसच्छन्नो भस्मन्येव हुताशनः। किञ्चिदस्य यथा पुंसः किञ्चिदस्य यथा स्त्रियः ॥ ३३ ॥ सारूप्यमर्जुनस्येव क्लीवरूपं बिभर्त्ति च। तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ॥ ३४ ॥ तद्वदेवास्य विक्रान्तं नायमन्यो धनञ्जयात्। अमरेष्विव देवेन्द्रो मानुषेषु धनञ्जयः ॥ ३५ ॥ एकः कोऽस्मानुपायायादन्यो लोके

धनञ्जयात् । एक पुत्रो विराटस्य शून्ये सन्निहितः पुरे ॥ ३६ ॥
स एष किल निर्य्यातो बालभावान्न पौरुषात् । सत्रेण नूनं छन्नं
हि चरन्तं पार्थमर्जुनम् ॥ ३७ ॥ उत्तरं सारथिं कृत्वा निर्यातो
नगराद्बहिः । स नो मन्यामहे दृष्ट्वा भीत एष पलायते । तन्नून-
मेष धावन्तं जिघृक्षति धनञ्जयः ॥ ३८ ॥'

वैशम्पायन उवाच । इति स्म कुरवः सर्वे विमृशन्तः पृथक्
पृथक् । न च व्यवसितुं किञ्चिदुत्तरं शक्नुवन्ति ते ॥ ३९ ॥ छन्नं
तथा तं सत्रेण पाण्डवं प्रेक्ष्य भारत । उत्तरन्तु प्रधावन्तमभि-
द्रुत्य धनञ्जय ॥ ४० ॥ गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ।
सोऽर्जुनेन परामृष्टः पर्य्यदेवयदार्त्तवत । बहुलं कृपणञ्चैव विरा-
टस्य सुतस्तदा ॥ ४१ ॥

उत्तर उवाच । शृणुयास्त्व हि कल्याणि बृहन्नले सुमध्यमे ।
निवर्त्तय रथं क्षिप्रं जीवन् भद्राणि पश्यति ॥ ४२ ॥ शातकुम्भस्य
शुद्धस्य शतं निष्कान् ददामि ते । मणीनष्टौ च वैदूर्य्यान् हेमबद्धा-
न्महाप्रभान् ॥ ४३ ॥ हेमदण्डप्रतिच्छन्नं रथं युक्तञ्च सुव्रतैः ।
मत्तांश्च दश मातङ्गान् मुञ्च मान्त्वं बृहन्नले ॥ ४४ ॥

वैशम्पायन उवाच । एवमादीनि वाक्यानि विलपन्तमचेतसम् ।
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ४५ ॥ अथैनमब्रवीत्
पार्थो भयार्त्तं नष्टचेतसम् । यदि नोत्सहसे योद्धुं शत्रुभिः शत्रु-
कर्षण ॥ ४६ ॥ एहि मे त्वं हयान् यच्छ युध्यमानस्य शत्रुभिः ।
प्रयाह्येतद्रथानीकं मद्बाहुबलरक्षित ॥ ४७ ॥ अप्रधृष्यतमं घोरं
गुप्तम्वीरैर्महारथैः । माभैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप
॥ ४८ ॥ कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि । अहं वै
कुरुभिर्योत्स्ये विजेष्यामि च ते पशून् ॥ ४९ ॥ प्रविश्यैतद्रथानीक-
मप्रधृष्यं दुरासदम् । यन्ता भव नरश्रेष्ठ योत्स्येऽहं कुरुभि सह
॥ ५० ॥ एवं ब्रुवाणो बीभत्सुर्वैराटिमपराजितः । समाश्वास्य

मुहूर्त्तमुत्तरं भरतर्षभ ॥ ५१ ॥ तत एनं विचेष्टन्तमकामं भय-
पीड़ितम् । रथमारोपयामास पार्थः प्रहरताम्वरः ॥ ५२ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि उत्तराश्वासने
अष्टाविंशोऽध्यायः ॥ ३८ ॥

---

वैशम्पायन उवाच । तं दृष्ट्वा क्लीववेशेन रथस्थं नरपुङ्गवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ १ ॥ भीष्मद्रोणमुखा-
स्तत्र कुरवो रथिसत्तमाः । वित्रस्तमनसः सर्वे धनञ्जयकृता-
द्भयात् ॥ २ ॥ तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।
गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ३ ॥ चण्डाश्च वाताः
संवान्ति रूक्षाः शर्करवर्षिणः । भस्मवर्णप्रकाशेन तमसा संवृतं
नभः ॥ ४ ॥ रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः । निःसरन्ति
च कोशेभ्यः शस्त्राणि विविधानि च ॥ ५ ॥ शिवाश्च विनदन्त्येता
दीप्तायां दिशि दारुणाः । हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्य-
कम्पिताः ॥ ६ ॥ यादृशान्यत्र रूपाणि सन्दृश्यन्ते बहूनि च ।
यत्ता भवन्तस्तिष्ठन्तु साध्वसं समुपस्थितम् ॥ ७ ॥ रक्षध्वमपि
चात्मानं व्यूहध्वं वाहिनीमपि । वैशसं च प्रतीक्षध्वं रक्षध्वञ्चापि
गोधनम् ॥ ८ ॥ एष वीरो महेष्वासः सर्वशस्त्रभृताम्वरः । आगतः
क्लीववेशेन पार्थो नास्त्यत्र संशयः ॥ ९ ॥ नदीज लङ्केशवनारि-
केतुर्नगाह्वयो नाम नगारिसूनुः । एषोऽङ्गनावेशधरः किरीटी
…ा वयं नेष्यति चाद्य गावः ॥ १० ॥ स एष पार्थो विक्रान्तः
…ाची परन्तपः । नायुद्धेन निवर्त्तेत सर्वैरपि सुरासुरैः ॥ ११ ॥
…तश्च वने शूरो वासवेनापि शिक्षितः । अमर्षवशमापन्नो
…प्रतिमो युधि ॥ १२ ॥ नेहास्य प्रतियोद्धारमहम्पश्यामि

कौरवा । महादेवोऽपि पार्थेन श्रूयते युधि तोषितः । किरात-
वेशप्रच्छन्नो गिरौ हिमवति प्रभुः ॥ १३

कर्ण उवाच । सदा भवान् फाल्गुनस्य गुणैरस्मान्विकत्थते ।
न चार्जुनः कलापूर्णो मम दुर्योधनस्य च ॥ १४ ॥

दुर्योधन उवाच । यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।
ज्ञाताः पुनश्चरिष्यन्ति द्वादशाब्दान्विशाम्पते ॥ १५ ॥ अथैष कश्चि-
देवान्यः क्लीववेशेन मानवः । शरैरेनं सुनिशितैः पातयिष्यामि
भूतले ॥ १६ ॥

वैशम्पायन उवाच । तस्मिन् ब्रुवति तद्वाक्यं धार्त्तराष्ट्रे पर-
न्तप । भीष्मो द्रोणः कृपो द्रौणिः पौरुषन्तदपूजयन् ॥ १७ ॥

इति विराटपर्वणि गोहरणपर्वणि अर्जुनप्रशंसाया
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

वैशम्पायन उवाच । ता शमीमुपसङ्गम्य पार्थो वैराटिमब्र-
वीत् । सुकुमारं समाज्ञाय संग्रामे नातिकोविदम् ॥ १ ॥ समा-
दिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर । नेमानि हि त्वदीयानि सोढुं
शक्ष्यन्ति मे बलम् ॥ २ ॥ भारञ्चापि गुरुं वोढुं कुञ्जरांश्चान्
प्रमर्द्दितुं । मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ॥ ३ ॥ तस्मा-
द्भूमिञ्जयारोह शमीमेतां पलाशिनीम् । अस्यां हि पाण्डुपुत्राणां
धनूंषि निहितान्युत ॥ ४ ॥ युधिष्ठिरस्य भीमस्य वीभत्सोर्यमयो-
स्तथा । ध्वजाः शराश्च शूराणा दिव्यानि कवचानि च ॥ ५ ॥
अत्र चैतन्महावीर्य्यं धनुः पार्थस्य गाण्डिवम् । एकं शतसहस्रेण
सम्मितं राष्ट्रवर्द्धनम् ॥ ६ ॥ व्यायामसहमत्यर्थं तृणराजसमं
महत् । सर्वायुधमहामात्रं शत्रुसम्बाधकारकम् ॥ ७ ॥ सुवर्ण-
विकृतं दिव्यं श्लक्ष्णमायतमव्रणम् । अलमारं गुरुं वोढुं दारुणं

दर्शनम् ॥ ८ ॥ तादृशान्येव सर्व्वाणि बलवन्ति दृढानि च। युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ॥ ९ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनास्त्रकथने चत्वारिंशोऽध्यायः ॥ ४० ॥

---

उत्तर उवाच। अस्मिन् वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतम्। तदहं राजपुत्रः सन् स्पृशेयं पाणिना कथम् ॥ १ ॥ नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना। महता राजपुत्रेण मन्त्रयज्ञविदा सदा ॥ २ ॥ स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम्। कथं वा व्यवहार्य्यं वै कुर्व्वीथास्त्वं बृहन्नले ॥ ३ ॥

बृहन्नलोवाच। व्यवहार्य्यश्च राजेन्द्र शुचिश्चैव भविष्यसि। धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते ॥ ४ ॥ दायादं मत्स्यराजस्य कुले जातं मनस्विनाम्। त्वां कथं निन्दितं कर्म्म कारयेऽहं नृपात्मज ॥ ५ ॥

वैशम्पायन उवाच। एवमुक्तः स पार्थेन रथात् प्रस्कन्द्य कुण्डली। आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ ६ ॥ तमन्वशासत् शत्रुघ्नो रथे तिष्ठन् धनञ्जयः। अवरोपय वृक्षाग्रात् धनूंष्येतानि मा चिरम् ॥ ७ ॥ परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद। सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ॥ ८ ॥ परिवेष्टनपत्राणि विमुच्य समुपानयत्। तथा सन्नहनान्येषां परिमुच्य समन्ततः ॥ ९ ॥ अपश्यद्गाण्डिवं तत्र चतुर्भिरपरैः सह। तेषां विमुच्यमानानां धनुषामर्कवर्च्चसाम् ॥ १० ॥ विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव। स तेषां रूपमालोक्य भोगिनामिव जृम्भताम् ॥ ११ ॥ हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत।

संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च । वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ १२ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि अस्त्रावरोपणे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

उत्तर उवाच । बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः । सहस्रकोटिसौवर्णाः कस्यैतद्धनुरुत्तमम् ॥ १ ॥ वारणा यत्र सौवर्णाः पृष्ठे भासन्ति दंशिताः । सुपार्श्वं सुग्रहञ्चैव कस्यैतद्धनुरुत्तमम् ॥२॥ तपनीयस्य शुद्धस्य षष्टिर्यस्येन्द्रगोपकाः । पृष्ठे विभक्ताः शोभन्ते कस्यैतद्धनुरुत्तमम् ॥ ३ ॥ सूर्य्या यत्र च सौवर्णास्त्रयो भासन्ति दंशिताः । तेजसा प्रज्वलन्तो हि कस्यैतद्धनुरुत्तमम् ॥ ४ ॥ शलभा यत्र सौवर्णास्तपनीयविभूषिताः । सुवर्णमणिचित्रञ्च कस्यैतद्धनुरुत्तमम् ॥ ५ ॥ इमे च कस्य नाराचाः साहस्रा लोमवाहिनः । समन्तात् कलधौताग्रा उपासङ्गे हिरण्मये ॥ ६ ॥ विपाठाः पृथवः कस्य गार्द्धपत्राः शिलाशिताः । हारिद्रवर्णाः सुमुखाः पीताः सर्व्वायसाः शराः ॥ ७ ॥ कस्यायमसितश्चापः पञ्चशार्दूललक्षणः । वराहकर्णव्यामिश्रान् शरान् धारयते दश ॥ ८ ॥ कस्येमे पृथवो दीर्घाश्चन्द्रबिम्बार्द्धदर्शनाः । शतानि सप्त तिष्ठन्ति नाराचा रुधिराशनाः ॥ ९ ॥ कस्येमे शुकपत्राभैः पूर्व्वैरर्द्धैः सुवाससः । उत्तरैरायसैः पीतैर्हेमपुङ्खैः शिलाशितैः ॥ १० ॥ गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः । कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ॥ ११ ॥ वैयाघ्रकोशे निहितो हेमचित्रत्सरुर्महान् । पृथक्चित्रकोशस्य किङ्किणीसायको महान् ॥ १२ ॥ कस्य हेमत्सरुर्दिव्यः खड्गः परमनिर्म्मलः । कस्यायं विमलः खड्गो गव्ये कोशे समर्पितः ॥ १३ ॥ हेमत्सरुरनाधृष्यो नैषध्यो भारसाधन ।

कस्य पाञ्चनखे कोषे सायको हेमविग्रहः ॥ १४ ॥ प्रमाणरूप-
सम्पन्नः पीत आकाशसन्निभः । कस्य हेममये कोषे सुतप्ते पावक-
प्रभे ॥ १५ ॥ निस्त्रिंशोऽयं गुरुः पीतः सायकः परनिर्व्रणः ।
कस्यायमसित खड्गो हेमविन्दुभिरावृतः ॥ १६ ॥ आशीविष-
समस्पर्शः परकायप्रभेदन । गुरुभारसहो दिव्य. सपत्नानां भय-
प्रदः ॥ १७ ॥ निर्दिशस्व यथातत्त्वं यथा पृष्टा वृहन्नले । विस्मयो
मे परो जातो दृष्ट्वा सर्वमिदं महत् ॥ १८ ॥

इति विराटपर्वणि गोहरणपर्वणि उत्तरस्यास्त्रदर्शने
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

वृहन्नलोवाच । यन्मां पूर्वमिहापृच्छः शत्रुसेनापहारिणम् ।
गाण्डीवमेतत् पार्थस्य लोकेषु विदितं धनुः ॥ १ ॥ सर्वायुधमहा-
मात्रं शातकुम्भपरिष्कृतम् । एतत्तदर्जुनस्यासीत् गाण्डीवं परमा-
युधम् ॥ २ ॥ यत्तच्छतसहस्रेण सम्मितः राष्ट्रवर्द्धनम् । येन देवान्
मनुष्यांश्च पार्थो विजयते मृधे ॥ ३ ॥ चित्रमुच्चावचैर्वर्णैः श्लक्ष्ण-
मायतमव्रणम् । देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ॥ ४ ॥
एतद्वर्षसहस्रन्तु ब्रह्मा पूर्वमधारयत् । ततोऽनन्तरमेवाथ प्रजा-
पतिरधारयत् ॥ ५ ॥ त्रीणि पञ्चशतं चैव शक्रोऽशीतिं च पञ्च च ।
सोमः पञ्चशतं राजा तथैव वरुणः शतम् ॥ ६ ॥ पार्थः पञ्च च
षष्टिञ्च वर्षाणि श्वेतवाहनः । महावीर्य्यं महादिव्यमेतत्तद्धनु-
रुत्तमम् ॥ ७ ॥ एतत् पार्थमनुप्राप्तं वरुणाच्चारुदर्शनम् । पूजितं
सुरमर्त्त्येषु बिभर्त्ति परमं वपुः ॥ ८ ॥ सुपार्श्वं भीमसेनस्य जात-
रूपग्रहं धनुः । येन पार्थोऽजयत् कृत्स्नां दिशं प्राचीं परन्तपः
॥ ९ ॥ इन्द्रगोपकचित्रञ्च यदेतच्चारुदर्शनम् । राज्ञो युधिष्ठिर-
स्यैतद्वैराटे धनुरुत्तमम् ॥ १० ॥ सूर्य्या यस्मिंस्तु सौवर्णाः प्रका-

भान्ते प्रकाशिनः । तेजसा प्रज्वलन्तो वै नकुलस्यैतदायुधम् ॥११॥ शलभा यत्र सौवर्णास्तपनीयविचित्रिताः । एतन्माद्रीसुतस्यापि सहदेवस्य कार्मुकम् ॥ १२ ॥ ये त्विमे क्षुरसङ्काशाः सहस्रा लोमवाहिनः । एतेऽर्जुनस्य वैराटे शराः सर्पविषोपमाः ॥ १३ ॥ एते ज्वलन्तः संग्रामे तेजसा शीघ्रगामिनः । भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् ॥ १४ ॥ ये चेमे पृथवो दीर्घाश्चन्द्रबिम्बार्द्धदर्शनाः । एते भीमस्य निशिता रिपुक्षयकराः शराः ॥ १५ ॥ हारिद्रवर्णा ये त्वेते हेमपुङ्खाः शिलाशिताः । नकुलस्य कलापोऽयं पञ्चशार्दूललक्षणः ॥ १६ ॥ येनासौ व्यजयत् कृत्स्नां प्रतीचीं दिशमाहवे । कलापो ह्येष तस्यासीन्माद्रीपुत्रस्य धीमतः ॥ १७ ॥ ये त्विमे भास्कराकाराः सर्वपारसवाः शराः । एते चित्रक्रियोपेताः सहदेवस्य धीमतः ॥ १८ ॥ ये त्विमे निशिताः पीताः पृथवो दीर्घवाससः । हेमपुङ्खास्त्रिपर्वाणो राज्ञ एते महाशराः ॥ १९ ॥ यस्त्वयं सायको दीर्घः शिलीपृष्ठः शिलीमुखः । अर्जुनस्यैष संग्रामे गुरुभारसहो दृढः ॥ २० ॥ वैयाघ्रकोशः सुमहान् भीमसेनस्य सायकः । गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः ॥ २१ ॥ सुफलश्चित्रकोशश्च हेमत्सरुमनुत्तमः । निस्त्रिंशः कौरवस्यैव धर्मराजस्य धीमतः ॥ २२ ॥ यस्तु पाञ्चनखे कोशे निहितश्चित्रयोधने । नकुलस्यैष निस्त्रिंशो गुरुभारसहो दृढः ॥ २३ ॥ यस्त्वयं विपुलः खड्गो गव्ये कोशे समर्पितः । सहदेवस्य विद्ध्येनं सर्वभारसहं दृढम् ॥ २४ ॥

इति विराटपर्वणि गोहरणपर्वणि उत्तरस्यास्त्रदर्शने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

उत्तर उवाच । सुवर्णविकृतानीमान्यायुधानि महात्मनाम् । रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् ॥ १ ॥ क्व नु स्विदर्जुन पार्थः कौरव्यो वा युधिष्ठिरः । नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ॥ २ ॥ सर्व्व एव महात्मानः सर्वामित्रविनाशनाः । राज्यमक्षैः पराकीर्य्य न श्रूयन्ते कथञ्चन ॥ ३ ॥ द्रौपदी क्व च पाञ्चाली स्त्रीरत्नमितिविश्रुता । जितानक्षैस्तदा कृष्णा तानेवान्वगमद्वनम् ॥ ४ ॥

अर्जुन उवाच । अहमस्म्यर्जुनः पार्थः सभास्तारो युधिष्ठिरः । वल्लवो भीमसेनस्तु पितुस्ते रसपाचकः ॥ ५ ॥ अश्वबन्धोऽथ नकुलः सहदेवस्तु गोकुले । सैरिन्ध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः ॥ ६ ॥

उत्तर उवाच । दश पार्थस्य नामानि यानि पूर्वं श्रुतानि ते । प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ॥ ७ ॥

अर्जुन उवाच । हन्त तेऽहं समाचक्षे दश नामानि यानि मे । वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ॥ ८ ॥ एकाग्रमानसो भूत्वा शृणु सर्वं समाहितः । अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः । बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः ॥ ९ ॥

उत्तर उवाच । केनासि विजयो नाम केनासि श्वेतवाहनः । किरीटीनाम केनासि सव्यसाची कथं भवान् ॥ १० ॥ अर्जुनः फाल्गुनो जिष्णुः कृष्णो बीभत्सुरेव च । धनञ्जयश्च केनासि ब्रूहि तन्मम तत्त्वतः ॥ ११ ॥ श्रुता मे तस्य वीरस्य केवला नामहेतवः । तत्सर्वं यदि मां ब्रूयाः श्रद्दध्यां सर्वमेव ते ॥ १२ ॥

अर्जुन उवाच । सर्वान् जनपदान् जित्वा वित्तमादाय केवलम् । मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् ॥ १३ ॥ अभिप्रयामि संग्रामे यदहं युद्धदुर्मदान् । नाजित्वा विनिवर्त्तामि तेन मां विजयं विदुः ॥ १४ ॥ श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति

मे हया। संग्रामे युध्यमानस्य तेनाहं श्वेतवाहनः॥ १५॥ उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामहं दिवा। जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः॥ १६॥ पुरा शक्रेण मे दत्तं युध्यतो दानवर्षभैः। किरीटं मूर्द्ध्नि सूर्य्याभं तेनाहुर्मां किरीटिनम्॥ १७॥ न कुर्य्यां कर्म बीभत्सं युध्यमानः कथञ्चन। तेन देवमनुष्येषु बीभत्सुरिति विश्रुतः॥ १८॥ उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे। तेन देवमनुष्येषु सव्यसाचीति मां विदुः॥ १९॥ पृथिव्यां चतुरन्तायां वर्णो दुर्लभः समः। करोमि कर्म शुक्लञ्च तेन मामर्जुनं विदुः॥ २०॥ अहं दुरापो दुर्द्धर्षो दमनः पाकशासनिः। तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः॥ २१॥ कृष्ण इत्येव दशमं नाम चक्रे पिता मम। कृष्णावदातस्य सतः प्रियत्वाद्बालकस्य वै॥ २२॥

वैशम्पायन उवाच। ततः स पार्थं वैराटिरभ्यवादयदन्तिकात्। अहं भूमिञ्जयो नाम नाम्नाहमपि चोत्तरः॥ २३॥ दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनञ्जय। लोहिताक्ष महाबाहो नागराजकरोपम॥ २४॥ यदज्ञानादवोचं त्वां क्षन्तुमर्हसि तन्मम। यतस्त्वया कृतं पूर्वं चित्रं कर्म सुदुष्करम्। अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि॥ २५॥

इति विराटपर्वणि गोहरणपर्वणि अर्जुनपरिचये
चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

---

उत्तर उवाच। आस्थाय रुचिरं वीर रथं सारथिना मया। कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया॥ १॥

अर्जुन उवाच। प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव। सर्वान्नुदामि ते शत्रून् रणे रणविशारद॥ २॥ स्वस्थो भव महा-

बाहो पश्य मां शत्रुभिः सह। युध्यमानं विमर्द्देऽस्मिन् कुर्व्वाणं भैरवं महत् ॥ ३ ॥ एतान् सर्व्वानुपासङ्गान् क्षिप्रं बध्नीहि मे रथे। एकञ्चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥ ४ ॥

वैशम्पायन उवाच। अर्जुनस्य वचः श्रुत्वा त्वरावानुत्तरस्तदा। अर्जुनस्यायुधान् गृह्य शीघ्रेणावतरत्ततः ॥ ५ ॥

अर्जुन उवाच। अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून्। सङ्कल्पपक्षविक्षेपं बाहुप्राकारतोरणम् ॥ ६ ॥ त्रिदण्डतूणसम्बाधमनेकध्वजसङ्कुलम्। ज्याक्षेपणं क्रोधकृतं नेमीनिनददुन्दुभिम् ॥ ७ ॥ नगरं ते मया गुप्तं रथोपस्थं भविष्यति। अधिष्ठितो मया सङ्ख्ये रथो गाण्डीवधन्वना। अजेयः शत्रुसैन्यानां वैराटे व्येतु ते भयम् ॥ ८ ॥

उत्तर उवाच। बिभेमि नाहमेतेषां जानमि त्वां स्थिरं युधि। केशवेनापि संग्रामे साक्षादिन्द्रेण वा समम् ॥ ९ ॥ इदन्तु चिन्तयन्नेवं परिमुह्यामि केवलम्। निश्चयञ्चापि दुर्मेधा न गच्छामि कथञ्चन ॥ १० ॥ एवं युक्ताङ्गरूपस्य लक्षणैः सूचितस्य च। केन कर्मविपाकेन क्लीवत्वमिदमागतम् ॥ ११ ॥ मन्ये त्वां क्लीववेशेन चरन्तं शूलपाणिनम्। गन्धर्वराजप्रतिमं देवं वापि शतक्रतुम् ॥ १२ ॥

अर्जुन उवाच। भ्रातुर्न्नियोगात् ज्येष्ठस्य सम्वत्सरमिदं व्रतम्। चरामि ब्रतचर्य्यञ्च सत्यमेतद्ब्रवीमि ते ॥ १३ ॥ नास्मि क्लीवो महाबाहो परवान् धर्मसंयुतः। समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ १४ ॥

उत्तर उवाच। परमोऽनुग्रहो मेऽद्य यतस्तर्को न मे वृथा। न हीदृशाः क्लीवरूपा भवन्ति तु नरोत्तम ॥ १५ ॥ सहायवानस्मि रणे युध्येयममरैरपि। साध्वसं हि प्रनष्टं मे किं करोमि ब्रवीहि मे ॥ १६ ॥ अहन्ते संग्रहीष्यामि हयान् शत्रुरथारुजान्। शिक्षितो ह्यस्मि सारथ्ये तीर्थतः पुरुषर्षभ ॥ १७ ॥ दारुको वासुदेवस्य

यथा शक्रस्य मातलिः। यथा मां विद्धि सारथ्ये स्थितं नर-
पुङ्गव॥ १८॥ यस्य याते न पश्यन्ति भूमौ क्षिप्तं पदं पदम्।
दक्षिणां यो धुरं युक्तः सुग्रीवसदृशो हयः॥ १९॥ योऽयं धुरं
धुर्य्यवरो वामं वहति शोभनः। तं मन्ये मेघपुष्पस्य जवने सदृशं
हयम्॥ २०॥ योऽयं काञ्चनसन्नाहः पार्ष्णिं वहति शोभनः
समं शैव्यस्य तं मन्ये जवेन बलवत्तरम्॥ २१॥ योऽयं वहति मे
पार्ष्णिं दक्षिणामभितः स्थितः। बलाहकादभिमतः स जवे
वीर्य्यवत्तरः॥ २२॥ त्वामेवायं रथो वोढुं संग्रामेऽर्हति धन्विनम्।
त्वञ्चेमं रथमास्थाय योद्धुमर्हो मतो मम॥ २३॥

वैशम्पायन उवाच। ततो विमुच्य बाहुभ्यां वलयानि स
वीर्य्यवान्। चित्रे काञ्चनसन्नाहे प्रत्यमुञ्चत्तदा शुभे॥ २४॥ कृष्णान्
भङ्गिमतः केशान् श्वेतेनोद्ग्रथ्य वाससा। अथासौ प्राङ्मुखो
भूत्वा शुचिः प्रयतमानसः॥ २५॥ अपि दध्यौ महाबाहुः सर्वा-
स्त्राणि रथोत्तमे। ऊचुश्च पार्थं सर्वाणि प्राञ्जलीनि नृपात्मजम्
॥ २६॥ इमे स्म परमोदाराः किङ्कराः पाण्डुनन्दन। प्रणिपत्य
ततः पार्थं समालभ्य च पाणिना॥ २७॥ सर्वाणि मानसानीह
भवतेत्यभ्यभाषत। प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत्॥ २८॥
अधिज्यन्तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः। तस्य विक्षिप्य-
माणस्य धनुषोऽभून्महाध्वनिः॥ २९॥ यथा शैलस्य महता
शैलेनैवावजघ्नुषः। सनिर्घाताभवद्भूमिर्दिक्षु वायुर्ववौ भृशम्॥३०॥
पपात महती चोल्का दिशो न प्रचकाशिरे। भ्रान्तध्वजं खन्त-
दासीत् प्रकम्पितमहाद्रुमम्॥ ३१॥ तं शब्दं कुरवोऽजानन्
विस्फोटमशनेरिव। यदर्ज्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्रथे॥३२॥

उत्तर उवाच। एकस्त्वं पाण्डवश्रेष्ठ बहूनेतान्महारथान्।
कथं जेष्यसि संग्रामे सर्वशस्त्रास्त्रपारगान्॥ ३३॥ असहायोऽसि
कौन्तेय ससहायाश्च कौरवाः। अतएव महाबाहो भीतस्तिष्ठामि

ऽश्नुतः ॥ ३४ ॥ उवाच पार्थो मा भैषिः प्रहस्य स्वनवत्तदा ।
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ॥ ३५ ॥ सहायो घोष-
यात्रायां कस्तदासीत् सखा मम । तथा प्रतिभये तस्मिन् देव-
दानवसङ्कुले ॥ ३६ ॥ खाण्डवे युध्यमानस्य कस्तदासीत् सखा
मम । निवातकवचैः सार्द्धं पौलोमैश्च महाबलैः ॥ ३७ ॥ युध्यतो
वराजार्थे कः सहायस्तदाभवत् । स्वयम्वरे तु पाञ्चाल्या राजभिः
सह संयुगे ॥ ३८ ॥ युध्यतो बहुभिस्तात कः सहायस्तदाभवत् ।
उपजीव्य गुरुं द्रोणं शक्रं वैश्रवणं यमम् ॥ ३९ ॥ वरुणं पावक-
ञ्चैव कृपं कृष्णञ्च माधवम् । पिनाकपाणिनञ्चैव कथमेतान्न
योधये । रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः ॥ ४० ॥

इति विराटपर्वणि गोहरणपर्वणि अर्ज्जुनयुद्धारम्भे
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

वैशम्पायन उवाच । उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रद-
क्षिणाम् । आयुधं सर्व्वमादाय प्रययौ पाण्डुनन्दनः ॥ १ ॥ ध्वजं
सिंहं रथात्तस्मादपनीय महारथः । प्रणिधाय शमीमूले प्रायात्
उत्तरसारथिः ॥ २ ॥ दैवीं मायां रथे युक्त्वा विहितां विश्वक-
र्म्मणा । काञ्चनं सिंहलाङ्गूलं ध्वजं वानरलक्षणम् ॥ ३ ॥ मनसा
चिन्तयामास प्रसादं पावकस्य च । स च तच्चिन्तितं ज्ञात्वा ध्वजे
भूतान्यदिशयत् ॥ ४ ॥ सपताकं विचित्राङ्गं सोपासङ्गं हिरण्मयम् ।
उत्पपात रथन्तूर्णं दिव्यरूपं मनोरमम् ॥ ५ ॥ रथं तमागतं
दृष्ट्वा दक्षिणं प्राकरोत्तदा । रथमास्थाय बीभत्सुः कौन्तेयः श्वेत-
वाहनः ॥ ६ ॥ बद्धगोधाङ्गुलित्राणः प्रगृहीतशरासनः । ततः
प्रायादुदीचीं स कपिप्रवरकेतनः ॥ ७ ॥ स्वनवन्तं महाशङ्खं बल-
वानरिमर्द्दनः । प्राधमद्बलमास्थाय द्विषतां लोमहर्षणम् ॥ ८ ॥

ततस्ते जवना धुर्य्या जानुभ्यामगमन्महीम्। उत्तरश्चापि सन्त्रस्तो रथोपस्थ उपाविशत् ॥ ९ ॥ संस्थाप्य चाश्वान् कौन्तेयः समुद्यम्य च रश्मिभिः। उत्तरं च परिष्वज्य समाश्वासयदर्जुनः ॥१० ॥

अर्जुन उवाच। मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप। कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ॥ ११ ॥ श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः। कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठताम् ॥ १२ ॥ स त्वं कथमिहानेन शङ्खशब्देन भीषितः। विषण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ॥ १३ ॥

उत्तर उवाच। श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कला। कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठताम् ॥ १४ ॥ नैवंविधः शङ्खशब्दः पुरा जातु मया श्रुतः। ध्वजस्य चापि रूपं मे दृष्टपूर्वं न हीदृशम् ॥ १५ ॥ धनुषश्चापि निर्घोषः श्रुतपूर्वो न मे क्वचित्। अस्य शङ्खस्य शब्देन धनुषो निःस्वनेन च ॥ १६ ॥ अमानुषाणां शब्देन भूतानां ध्वजवासिनाम्। रथस्य च निनादेन मनो मुह्यति मे भृशम् ॥ १७ ॥ व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव मे। ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे। गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ॥ १८ ॥

अर्जुन उवाच। एकान्तं रथमास्थाय पद्भ्यां त्वमवपीड्य। दृढं च रश्मीन् संयच्छ शङ्खं ध्मास्याम्यहं पुनः ॥ १९ ॥

वैशम्पायन उवाच। ततः शङ्खमुपाध्मासीद्दारयन्निव पर्वतान्। द्विषतां दुःखजननं सुहृदां हर्षवर्द्धनम् ॥ २० ॥ गुहा गिरीणां च तदा दिशः शैलास्तथैव च। उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ॥ २१ ॥ तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च। गाण्डीवस्य च शब्देन पृथिवी समकम्पत। तं समाश्वासयामास पुनरेव धनञ्जयः ॥ २२ ॥

द्रोण उवाच। यथा रथस्य निर्घोषो यथा मेघ उदीर्य्यते।

प्रकम्पते यथा भूमिर्निर्घोषोऽस्यः सव्यसाचिनः ॥ २३ ॥ शस्त्राणि न
प्रकाशन्ते न प्रहृष्यन्ति वाजिनः । अग्नयश्च न भासन्ते समिद्धास्तन्न
शोभनम् ॥ २४ ॥ प्रत्यादित्यं च नः सर्वे मृगा घोरप्रवादिनः ।
ध्वजेषु च निलीयन्ते वायसास्तन्न शोभनम् ॥ २५ ॥ शकुनाश्चाप-
सव्या नो वेदयन्ति महद्भयम् । गोमायुरेष सेनायां रुवन्मध्ये
प्रधावति ॥ २६ ॥ अनाहतश्च निष्क्रान्तो महद्वेदयते भयम् ।
भवतां रोमकूपानि प्रहृष्टान्युपलक्षये ॥ २७ ॥ ध्रुवं विनाशो युद्धेषु
क्षत्रियाणां प्रदृश्यते । ज्योतींषि न प्रकाशन्ते दारुणा मृग-
पक्षिणः ॥ २८ ॥ उत्पाता विविधा घोरा दृश्यन्ते क्षत्रनाशनाः ।
विशेषत इहास्माकं निमित्तानि विनाशने ॥ २९ ॥ उल्काभिश्च
प्रदीप्ताभिर्बाध्यन्ते पृतना तव । वाहनान्यप्रहृष्टानि रुदन्तीव विशां-
पते ॥ ३० ॥ उपासते च सैन्यानि गृध्रास्तव समन्ततः । तप्स्यसे
वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ॥ ३१ ॥ पराभूता च नः
सेना न कश्चिद्योद्धुमिच्छति । विवर्णमुखभूयिष्ठाः सर्वे योधा
विचेतसः । गाश्च प्रस्थाप्य तिष्ठामो व्यूढानीकाः प्रहारिणः ॥३२॥

इति विराटपर्वणि गोहरणपर्वणि उत्पातदर्शने
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

वैशम्पायन उवाच । अथ दुर्य्योधनो राजा समरे भीष्ममब्र-
वीत् । द्रोणं च रथशार्दूलं कृपं च सुमहारथम् ॥ १ ॥ उक्तोऽय-
मर्थं आचार्य्यौ मया कर्णेन चासकृत् । पुनरेव च वक्ष्यामि न हि
तृप्यामि तं ब्रुवन् ॥ २ ॥ पराजितैर्हि वस्तव्यं तैश्च द्वादशवत्सरान् ।
वने जनपदेऽज्ञातैरेष एव पणो हि नः ॥ ३ ॥ तेषां न ताव-
न्निर्वृत्तं वर्त्तते तु त्रयोदशम् । अज्ञातवासो बीभत्सुरथास्माभिः
समागतः ॥ ४ ॥ अनिर्वृत्तेऽपि निर्वाणे यदि बीभत्सुरागतः । पुनः-

हीनस्ववर्णाणि वने वत्स्यन्ति पाण्डवाः ॥ ५ ॥ लोभाद्वा ते न जानीयुरस्मान् वा मोह आविशत्। हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ६ ॥ अर्थानां हि पुनर्द्वैधे नित्यं भवति संशयः। अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा ॥ ७ ॥ स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः। उत्तरं मार्गमाणानां मत्स्यानाञ्च युयुत्सताम् ॥ ८ ॥ यदि बीभत्सुरायातस्तदा कस्यापराध्नुमः। त्रिगर्त्तानां वयं हेतोर्मत्स्यान् योद्धुमिहागताः ॥ ९ ॥ मत्स्यानां विप्रकारांस्ते बहूनस्मास्वकीर्त्तयन्। तेषां भयाभिभूतानां तदस्माभिः प्रतिश्रुतम् ॥ १० ॥ प्रथमं तैर्ग्रहीतव्यं मत्स्यानां गोधनं महत्। सप्तम्यामपराह्णे वै तथा नस्तैः समाहितम् ॥ ११ ॥ अष्टम्यां पुनरस्माभिरादित्यस्योदयं प्रति। इमा गावो ग्रहीतव्या गते मत्स्ये गवाम्पदम् ॥ १२ ॥ ते वा गाश्चानयिष्यन्ति यदि वा स्युः पराजिताः। अस्मान् वा ह्युपसन्धाय कुर्य्युर्मत्स्येन सङ्गतम् ॥ १३ ॥ अथवा तानपाहाय मत्स्यो जनपदैः सह। सर्वया सेनया सार्द्धं संवृतो भीमरूपया ॥ १४ ॥ आयातः केवलां रात्रिमस्मान् योद्धुमुपागतः। तेषामेव महावीर्य्यः कश्चिदेष पुरःसरः ॥ १५ ॥ अस्मान् योद्धुमुपायातो मत्स्यो वा हि स्वयं भवेत्। यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ॥ १६ ॥ सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः। अथ कस्मात् स्थिता ह्येते रथेषु नरसत्तमाः ॥ १७ ॥ भीष्मो द्रोणः कृपश्चैव विकर्णो द्रौणिरेव च। सम्भ्रान्तमनसः सर्वे काले ह्यस्मिन्महारथाः ॥ १८ ॥ नान्यत्र युद्धाच्छ्रेयोऽस्ति तथात्मा प्रणिधीयताम्। आच्छिन्ने गोधनेऽस्माकमपि देवेन वज्रिणा ॥ १९ ॥ यमेन वापि संग्रामे को हास्तिनपुरं व्रजेत्। शरैरभिः प्रणुन्नानां भग्नानां गहने वने ॥ २० ॥ को हि जीवेत् पदातीनां भवेदश्वेषु संशयः। आचार्य्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ॥ २१ ॥ जानाति हि मतं तेषां मनस्त्रासयतीव नः।

अर्जुने चास्य सम्प्रीतिमधिकामुपलक्षये ॥ २२ ॥ तस्माद्धि दृष्ट्वा बीभत्सुमुपायान्तं प्रशंसति ॥ २३ ॥ यथा सेना न भज्येत तथा नीतिर्विधीयताम् । क्रोशितं ह्यप्रसृष्टाने द्रोणे सर्वं विघट्टितम् ॥२४॥ अदेशिका महारण्ये ग्रीष्मे शत्रुवशङ्गता । यथा न विभ्रमेत्सेना तथा नीतिर्विधीयताम् ॥ २५ ॥ दृष्टा हि पाण्डवा नित्यमाचार्य्यस्य विशेषतः । आशयन्नपरार्थाश्च कथ्यते स्म स्वयं तथा ॥२६॥ अश्वानां क्रोशितं श्रुत्वा कः प्रशंसापरो भवेत । स्थाने वापि व्रजन्तो वा सदा क्रोशन्ति वाजिनः ॥ २७ ॥ सदा च वायवो वान्ति नित्यं वर्षति वासवः । स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा ॥ २८ ॥ किमत्र कार्य्यं पार्थस्य कथं वा स प्रशस्यते । अन्यत्र कामाद्द्वेषाद्वा रोषाद्वास्मासु केवलात् ॥ २९ ॥ आचार्य्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः । नैते महाभये प्राप्ते सम्प्रष्टव्याः कथञ्चन ॥ ३० ॥ प्रासादेषु विचित्रेषु गोष्ठीषूपवनेषु च । कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः ॥ ३१ ॥ बहून्याश्चर्य्यरूपाणि कुर्वन्तो जनसंसदि । इष्वास्त्रे चोपसन्धाने पण्डितास्तत्र शोभनाः ॥ ३२ ॥ परेषां विवरज्ञाने मनुष्यचरितेषु च । हस्त्यश्वरथचर्य्यासु खरोष्ट्राजाविकर्मणि ॥ ३३ ॥ गोधनेषु प्रतोलीषु वरद्वारमुखेषु च । अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः ॥ ३४ ॥ पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः । विधीयतां तथा नीतिर्यथा वध्येत वै परः ॥ ३५ ॥ गावश्च सम्प्रतिष्ठाप्य सेनां व्यूह्य समन्ततः । आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परान् ॥ ३६ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि दुर्य्योधनवाक्ये सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

कर्ण उवाच। सर्वानायुधतो भीतान् सम्प्रस्थानिव संयुगे। अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् ॥ १ ॥ यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः। अहमावारयिष्यामि वेलेव मकरालयम् ॥२॥ मम चापप्रयुक्तानां शराणां नतपर्वणाम्। नावृत्तिर्गच्छतामस्ति सर्पाणामिव सर्पताम् ॥ ३ ॥ रुक्मपुङ्खाः सुतीक्ष्णाग्रा मुक्ता हस्तवता मया। छादयन्तु शराः पार्थं शलभा इव पादपम् ॥ ४ ॥ शराणां पुङ्खसक्तानां मौर्व्याभिहतया दृढम्। श्रूयतां तलयोः शब्दो भेर्योराहतयोरिव ॥ ५ ॥ समाहितो हि बीभत्सुर्वर्षाण्यष्टौ च पञ्च च। जातस्नेहश्च युद्धेऽस्मिन् मयि सम्प्रहरिष्यति ॥ ६ ॥ पात्रीभूतश्च कौन्तेयो ब्राह्मणो गुणवानिव। शरौघान् प्रतिगृह्णातु मया मुक्तान् सहस्रशः ॥ ७ ॥ एष चैव महेष्वासस्त्रिषु लोकेषु विश्रुतः। अहं चापि नरश्रेष्ठादर्जुनान्नावरः क्वचित् ॥८॥ इतश्चेतश्च निर्मुक्तैः काञ्चनैर्गार्द्ध्रवाजितैः। दृश्यतामद्य वै व्योम खद्योतैरिव संवृतम् ॥९॥ अद्याहमृणमक्षय्यं पुरा वाचा प्रतिश्रुतम्। धार्त्तराष्ट्रस्य दास्यामि निहत्य समरेऽर्जुनम् ॥१०॥ मत्कार्मुकविमुक्तानां शराणां नतपर्वणाम्। कः सहेताग्रतः स्थातुमपि सर्वैः सुरासुरैः। अन्तराच्छिद्यमानानां पुङ्खानां व्यतिशीर्य्यताम्। शलभानामिवाकाशे प्रचारः सम्प्रदृश्यताम् ॥ ११ ॥ इन्द्राशनिसमस्पर्शं महेन्द्रसमतेजसम्। अर्द्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् ॥ १२ ॥ रथादतिरथं शूरं सर्वशस्त्रभृतां वरम्। विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥ १३ ॥ तमग्निमिव दुर्द्धर्षमसिशक्तिशरेन्धनम्। पाण्डवाग्निमहं दीप्तं प्रदहन्तमिवाहितान् ॥ १४ ॥ अश्ववेगपुरोवातो रथौघस्तनयित्नुमान्। शरधारो महामेघः शमयिष्यामि पाण्डवम् ॥ १५ ॥ मत्कार्मुकविनिर्मुक्ताः पार्थमाशीविषोपमाः। शराः समभिसर्पन्तां वल्मीकमिव पन्नगाः ॥ १६ ॥ सुतेजनैरुक्मपुङ्खैः सुपीतैर्नतपर्वभिः। आचितं पश्य कौन्तेयं कर्णिकारैरिवा-

चलम् ॥ १७ ॥ आमदग्न्याग्भया यस्तं सम्प्राप्तमृषिसत्तमात्। तदुपाश्रित्य वीर्य्येञ्च युध्येयममरैरपि ॥ १८ ॥ ध्वजाग्रे वानरस्तिष्ठन् भल्लेन निहतो मया। यद्यैव पततां भूमौ विनदन् भैरवान् रवान् ॥ १९ ॥ यवोर्मया विपन्नानां भूतानां ध्वजवासिनाम्। दिशः प्रतिष्ठमानानामस्तु शब्दो दिवङ्गमः ॥ २० ॥ अद्य दुर्य्योधनस्याहं शल्यं हृदि चिरस्थितम्। समूलमुद्धरिष्यामि बीभत्सुं पातयन् रथात् ॥ २१ ॥ हताश्वं विरथं पार्थं पौरुषे पर्य्यवस्थितम्। निश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ॥ २२ ॥ कामं गच्छन्तु कुरवो धनमादाय केवलम्। रथेषु वापि तिष्ठन्तो युद्धं पश्यन्तु मामकम् ॥ २३ ॥

इति विराटपर्वणि गोहरणपर्वणि कर्णविकत्थने
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

कृप उवाच। सदैव तव राधेय युद्धे क्रूरतरा मतिः। नार्थानां प्रकृतिं वेत्सि नानुबध्यमवेक्ष्यसे ॥ १ ॥ मया हि बहवः सन्ति शास्त्रमाश्रित्य चिन्तिता। तेषां युद्धन्तु पापिष्ठं वेदयन्ति पुराविदः ॥ २ ॥ देशकालेन संयुक्तं युद्धं विजयदं भवेत्। हीनकालं तदेवेह फलं न लभते पुनः ॥ ३ ॥ देशे काले च विक्रान्तं कल्याणाय विधीयते। आनुकूल्येन कार्य्याणामन्तरं संविधीयते ॥ ४ ॥ भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः। परिचिन्त्य तु पार्थेन सन्निपातो न नः क्षमः ॥ ५ ॥ एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत्। एकश्च पञ्चवर्षाणि ब्रह्मचर्य्यमधारयत् ॥ ६ ॥ एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत्। एकः किरातरूपेण स्थितं रुद्रमयोधयत् ॥ ७ ॥ अस्मिन्नेव वने पार्थो हृतां कृष्णामवाजयत्। एकश्च पञ्चवर्षाणि शक्रादस्त्राण्यशिक्षत ॥ ८ ॥ एकः

सोऽयमरिं जित्वा कुरूणामकरोद्यशः। एको गन्धर्वराजानं चित्र-सेनमरिन्दमम्॥ ९॥ विजिग्ये तरसा सङ्ख्ये सेनां प्राप्य सुदु-र्ज्जयाम्। तथा निवातकवचा कालकञ्जाश्च दानवाः॥ १०॥ दैवतैरप्यवध्यास्ते एकेन युधि पातिताः। एकेन हि त्वया कर्ण किं नामेह कृतं पुरा॥ ११॥ एकैकेन यथा तेषां भूमिपाला वशे कृताः। इन्द्रोऽपि न हि पार्थेन संयुगे योद्धुमर्हति॥ १२॥ यस्तेनाशंसते योद्धुं कर्त्तव्यं तस्य भेषजम्। आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम्॥ १३॥ अवमुच्य प्रदेशिन्या दंष्ट्रामादातु-मिच्छसि। अथवा कुञ्जरं मत्तमेक एव चरन्वने॥ १४॥ अन-ङ्कुशः समारुह्य नगरं गन्तुमिच्छसि। समिद्धं पावकं वापि घृत-मेदोवसाहुतम्॥ १५॥ घृताक्तश्चीरवासास्त्वं मध्येनोत्सर्त्तुमिच्छति। आत्मानं कः समुद्बध्य कण्ठे बद्ध्वा महाशिलाम्॥ १६॥ समुद्रं प्रतरेद्दोर्भ्यां तत्र किं नाम पौरुषम्। अकृतास्त्रः कृतास्त्रं वै बल-वन्तं सुदुर्बलः॥ १७॥ तादृशं कर्ण यः पार्थं योद्धुमिच्छेत् स दुर्मतिः। अस्माभिर्ह्येष निकृतो वर्षाणीह त्रयोदश॥ १८॥ सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति। एकान्ते पार्थमासीनं कूपे-ऽग्निमिव संवृतम्॥ १९॥ अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भय-मुत्तमम्। सहयुध्यामहे पार्थमागतं युद्धदुर्मदम्॥ २०॥ सैन्या-स्तिष्ठन्तु सन्नद्धा व्यूढानीकाः प्रहारिणः। द्रोणो दुर्य्योधनो भीष्मो भवान् द्रौणिस्तथा वयम्॥ २१॥ सर्वे युध्यामहे पार्थं कर्ण मा साहसं कृथाः। वयं व्यवसिता पार्थं वज्रपाणिमिवोद्यतम्॥ २२॥ षड्रथाः प्रतियुध्येम तिष्ठेम सहिता यदि। व्यूढानीकानि सैन्यानि यत्ताः परमधन्विनः। युध्यामहेऽर्जुनं सङ्ख्ये दानवा इव वासवम्।२३।

इति किराटपर्वणि गोहरणपर्वणि कृपवाक्ये
एकोनपञ्चाशोऽध्यायः॥ ४९॥

---

अश्वत्थामोवाच । न च तावज्जिता गावो न च सीमान्तरं-कृताः । न हास्तिनपुरं प्राप्तास्त्वन्तु कर्ण विकत्थसे ॥ १ ॥ संग्रामान् सुबहून् जित्वा लब्ध्वा च विपुलं धनम् । विजित्य च परां सेनां नाहुः किञ्चन पौरुषम् ॥ २ ॥ दहत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः । तूष्णीं धारयते लोकान् वसुधा सचराचरान् ॥ ३ ॥ चातुर्वर्ण्यस्य कर्माणि विहितानि स्वयम्भुवा । धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ॥ ४ ॥ अधीत्य ब्राह्मणो वेदान् याजयेत यजेत च । क्षत्रियो धनुराश्रित्य यजेच्चैव न याजयेत् ॥ ५ ॥ वैश्योऽधिगम्य वित्तानि ब्रह्मकर्माणि कारयेत् । शूद्रः शुश्रूषणं कुर्य्यात्त्रिषु वर्णेषु नित्यशः । वञ्चनायोगविधिभिर्वैतसीं वृत्तिमाश्रिताः ॥ ६ ॥ वर्त्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् । सत्कुर्वन्ति महाभागा गुरून् सुविगुणानपि ॥ ७ ॥ प्राप्य द्यूतेन को राज्यं क्षत्रियस्तोष्टुमर्हति । तथा नृशंसरूपोऽयं धार्त्तराष्ट्रश्च निर्घृणः ॥ ८ ॥ तथाभिगम्य वित्तानि को विकत्थेद्विचक्षणः । निकृत्या वञ्चनायोगैश्चरन्वैतंसिको यथा ॥ ९ ॥ कतमद्द्वैरथं युद्धं यत्राजैषीर्धनञ्जयम् । नकुलं सहदेवं वा धनं येषां त्वया हृतम् ॥ १० ॥ युधिष्ठिरो जितः कस्मिन् भीमो वा बलिनां वरः । इन्द्रप्रस्थं त्वया कस्मिन् संग्रामे विजितं पुरा ॥ ११ ॥ तथैव कतमद्युद्धं यस्मिन् कृष्णा जिता पुरा । एकवस्त्रा सभां नीता दुष्टकर्म्मन्रजस्वला ॥ १२ ॥ मूलमेषां महत् कृत्तं सारार्थी चन्दनं यथा । कर्म्म कारयथाः सूत तत्र किं विदुरोऽब्रवीत् ॥ १३ ॥ यथाशक्ति मनुष्याणां शममालक्षयामहे । अन्येषां चैव सत्त्वनामपि कीटपिपीलिके ॥ १४ ॥ द्रौपद्यास्तं परिक्लेशं न क्षन्तुं पाण्डवोऽर्हति । क्षयाय धार्त्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ॥ १५ ॥ त्वं पुनः पण्डितो भूत्वा वाचं वक्तुमिहेच्छसि । वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति ॥ १६ ॥ नैष देवान्न गन्धर्वान्नासुरान्न च राक्षसान् ।

भयादिह न युध्येत कुन्तीपुत्रो धनञ्जयः ॥ १७ ॥ यं यमेषोऽभिसंक्रुद्धः संग्रामे निपतिष्यति । वृक्षं गरुत्मान् वेगेन विनिहत्य तमेष्यति ॥ १८ ॥ त्वत्तो विशिष्टं वीर्य्येण धनुष्यमरराट्समम् । वासुदेवसमं युद्धे पार्थं को वा न पूजयेत् ॥ १९ ॥ देवेन देवं युध्येत मानुषेण च मानुषम् । अस्त्रं ह्यस्त्रेण यो हन्यात् कोऽर्जुनेन समः पुमान् ॥ २० ॥ पुत्रादनन्तरः शिष्य इति धर्मविदो विदुः । एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः ॥ २१ ॥ यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाहरः । यथानैषीः सभां कृष्णां तथा युध्यस्व पाण्डवम् ॥ २२ ॥ अयं ते मातुलः प्राज्ञः क्षात्रधर्मस्य कोविदः । दुर्द्यूतदेवी गान्धारः शकुनिर्युध्यतामिह ॥ २३ ॥ नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च । ज्वलतो निशितान् वाणांस्तीक्ष्णान् क्षिपति गाण्डिवम् ॥ २४ ॥ न हि गाण्डीवनिर्मुक्ता गार्द्धपत्राः सुतेजनाः । अन्तरेष्ववतिष्ठन्ते गिरीणामपि दारुणाः ॥ २५ ॥ अन्तकः पवनो मृत्युस्तथाग्निर्वड़वामुखः । कुर्य्युरेते क्वचिच्छेषं न तु क्रुद्धो धनञ्जयः ॥ २६ ॥ यथा सभायां द्यूतं त्वं मातुलेन सहाकरोः । तथा युद्धस्व संग्रामे सौबलेन सरक्षितः ॥२७॥ युध्यन्तां कामतो योधा नाहं योत्स्ये धनञ्जयम् । मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवा पदम् ॥ २८ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि अश्वत्थामाभर्त्सनवाक्ये पञ्चाशोऽध्यायः ॥ ५० ॥

---

भीष्म उवाच । साधु पश्यति वै द्रोणिः कृपश्च साधु पश्यति कर्णस्तु क्षात्रधर्म्मेण केवलं योद्धुमिच्छति ॥ १ ॥ आचार्य्यो नाभिवक्तव्यः पुरुषेण विजानता । देशकालौ तु सम्प्रेक्ष्य योद्धव्यमिति मे मतिः ॥ २ ॥ यस्य सूर्य्यसमाः पञ्च सपत्नाः सुप्रहारिणः

कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ॥ ३ ॥ स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः । तस्माद्राजन् ब्रवीम्येतद्वाक्यं ते यदि रोचते ॥ ४ ॥ कर्णो हि यदवोचत्त्वां तेज सञ्जननाय तत् । आचार्य्यपुत्र क्षमतां महती कार्य्यमुपस्थितम् ॥ ५ ॥ नायं कालो विरोधस्य कौन्तेये समुपस्थिते । क्षन्तव्यं भवता सर्वमाचार्य्येण कृपेण च ॥ ६ ॥ भवतां हि कृतास्त्रत्वं यथादित्ये प्रभा तथा । यथा चन्द्रमसो लक्ष्मीः सर्वथा नापकृष्यते ॥ ७ ॥ एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रञ्च प्रतिष्ठितम् । चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते ॥ ८ ॥ नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुम । अन्यत्र भारताचार्य्यात् सपुत्रादिति मे मतिः ॥ ९ ॥ ब्रह्मास्त्रं ब्रह्म वेदाश्च नैतदन्यत्र दृश्यते । अन्यत्र भारताचार्य्यात् द्रोणात् पुरुषसत्तमात् ॥ १० ॥ वेदान्ताश्च पुराणानि इतिहासं पुरातनम् । जामदग्न्यमृते राजन् को द्रोणादधिको भवेत् ॥ ११ ॥ आचार्य्यपुत्रः क्षमतां नायं कालस्य भेदने । सर्वे संहत्य युध्यामः पाकशासनिमागतम् ॥ १२ ॥ बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः । मुख्यो भेदो हि तेषान्तु पापिष्ठो विदुषां मत ॥ १३ ॥

द्रौणिरुवाच । नैवं न्याय्यमिदं वाक्यमस्माकं पुरुषर्षभ । किन्तु रोषपरीतेन गुरुणा भाषिता गुणाः ॥ १४ ॥ शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि । सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ १५ ॥

दुर्य्योधन उवाच । आचार्य्य एष क्षमतां शान्तिरस्मिन् विधीयताम् । अभिद्यमाने तु गुरौ तद्वृत्तं रोषकारितम् ॥ १६ ॥

वैशम्पायन उवाच । ततो दुर्य्योधनो द्रोणं क्षमयामास भारत । सह कर्णेन भीष्मेण कृपेण च महात्मना ॥ १७ ॥

द्रोण उवाच । यदेतत् प्रथमं वाक्य भीष्मः शान्तनवोऽब्रवीत् । तेनैवाहं प्रसन्नो वै नीतिरत्र विधीयताम् ॥ १८ ॥ यथा दुर्य्यो-

धनं पार्थो नोपसर्पति सङ्गरे। यथा दुर्य्योधनो राजा न गच्छे-द्विषतां वशम्॥ १९॥ साहसाद्यदि वा मोहात्तथा नीतिर्विधी-यताम्। वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनञ्जयः॥ २०॥ धन-ञ्चालभमानोऽत्र नाद्य तत् क्षन्तुमर्हति। यथा नायं समायुञ्ज्या-द्धार्त्तराष्ट्रं कथञ्चन॥ २१॥ न च सेना पराजय्यात्तथा नीति-र्विधीयताम्। उक्तं दुर्य्योधनेनापि पुरस्ताद्वाक्यमीदृशम्। तदनु-स्मृत्य गाङ्गेयो यथावद्वक्तुमर्हति॥ २२॥

इति विराटपर्वणि गोहरणपर्वणि द्रोणवाक्ये एकपञ्चाशोऽध्यायः॥ ५१॥

---

भीष्म उवाच। कलाकाष्ठाश्च युज्यन्ते मुहूर्त्ताश्च दिनानि च। अर्द्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा॥ १॥ ऋतवश्चापि युज्यन्ते तथा सम्वत्सरा अपि। एवं कालविभागेन कालचक्रं प्रवर्त्तते॥ २॥ तेषां कालातिरेकेण ज्योतिषाञ्च व्यतिक्रमात्। पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः॥ ३॥ एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः। त्रयोदशानां वर्षाणामिति मे वर्त्तते मतिः॥ ४॥ सर्वं यथावच्चरितं यद्यदेभिः परिश्रुतम्। एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः॥ ५॥ सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः। येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः॥ ६॥ अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम्। न चापि केवलं राज्यमिच्छेयुस्तेऽनुपायतः॥ ७॥ तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः। धर्मपाशनिबद्धास्ते न चेलुः क्षत्रियव्रतात्॥ ८॥ यच्चानृत इति ख्यायाद्य स गच्छेत्पराभवम्। वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन॥ ९॥ प्राप्ते काले तु प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः। अपि वज्रभृता गुप्तं तथावीर्य्या हि पाण्डवाः॥ १०॥

मरे सर्वशस्त्रभृतां वरम् । तस्मादत्र कल्याणं लोके सद्भिरनुष्ठितम् ॥ ११ ॥ तस्मं विधीयतां शीघ्रं मानो ह्यर्थोऽभ्यगात्परम् । न हि पश्यामि संग्रामे कदाचिदपि कौरव ॥ १२ ॥ एकान्तसिद्धिं राजेन्द्र सम्प्राप्तश्च धनञ्जयः । सम्प्रवृत्ते तु संग्रामे भावाभावौ जयाजयौ । अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ १३ ॥ तस्मायुद्धोचितं कर्म कर्म वा धर्मसंहितम् । क्रियतामाशु राजेन्द्र सम्प्राप्तो हि धनञ्जयः ॥ १४ ॥

दुर्य्योधन उवाच । नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह । युद्धोपचारिकं यत्तु तच्छीघ्रं संविधीयताम् ॥ १५ ॥

भीष्म उवाच । अत्र या मामिका बुद्धिः श्रूयतां यदि रोचते । सर्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन ॥ १६ ॥ क्षिप्रं बलं चतुर्भागं गृह्य गच्छ पुरं प्रति । ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु ॥ १७ ॥ वयं त्वर्द्धेन सैन्येन प्रतियोत्स्याम पाण्डवम् । अहं द्रोणश्च कर्णश्च द्रौणिः शारद्वतस्तथा ॥ १८ ॥ प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयम् । मत्स्यं वा पुनरायातमागतं वा शतक्रतुम् । अहमावारयिष्यामि वेलेव मकरालयम् ॥ १९ ॥

वैशम्पायन उवाच । तद्वाक्यं रुरुचे तेषां भीष्मेणोक्तं महात्मना । तथैव कृतवान् राजा कौरवाणामनन्तरम् ॥ २० ॥ भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् । सेनामुख्यान् व्यवस्थाप्य व्यूहितुं सम्प्रचक्रमे ॥ २१ ॥

भीष्म उवाच । आचार्य्य मध्ये तिष्ठ त्वमश्वत्थामा तु सव्यतः । कृपः शारद्वतो धीमान् पार्श्वं रक्षतु दक्षिणम् ॥ २२ ॥ अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः । अहं सर्वस्य सैन्यस्य पश्चात् स्थास्यामि पालयन् ॥ २३ ॥

इति विराटपर्वणि गोहरणपर्वणि भीष्मसैन्यव्यूहे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

वैशम्पायन उवाच। स शत्रुसेनां तरसा प्रणुद्य गास्ता विजित्याथ धनुर्द्धराग्रः। दुर्य्योधनायाभिमुखः प्रयातो भूयो रणेऽभिचिकीर्षमाणः॥ १॥ गोषु प्रयातासु जवेन मत्स्याः किरीटिनं कार्य्यकृतञ्च मत्वा। दुर्य्योधनायाभिमुखं प्रयातं कुरुप्रवीराः सहसाभिपेतुः॥ २॥ तेषामनीकानि बहूनि गाढं व्यूढानि दृष्ट्वा बहुलध्वजानि। मत्स्यस्य पुत्रं द्विषतां निहन्ता वैराटिमामन्त्र्य ततोऽभ्युवाच॥ ३॥ एतेन तूर्णं प्रतिपादयेमान् श्वेतान् हयान् काञ्चनरश्मियोक्त्रान्। जवेन सर्व्वेण कुरु प्रयत्नमासादयेदं कुरुसिंहवृन्दम्॥ ४॥ गजो गजेनेव मया दुरात्मा यो योद्धुमाकाङ्क्षति सूतपुत्रः। तमेव मां प्रापय राजपुत्र दुर्य्योधनापाश्रयजातदर्पम्॥ ५॥ स तैर्हयैर्वातजवैर्वृहद्भिः पुत्रो विराटस्य सुवर्णकक्षैः। व्यध्वंसयत्तद्रथिनामनीकं ततोऽवहत्पाण्डवमाजिमध्ये॥ ६॥ तं चित्रसेनो विशिखैर्विपाठैः संग्रामजिच्छत्रुसहो जयश्च। प्रत्युद्ययुर्भारतमापतन्तं महारथाः कर्णमभीप्समानाः॥ ७॥ ततः स तेषां पुरुषप्रवीरः शरासनार्च्चिः शरवेगतापः। व्रातं रथानामदहत्समन्युर्वनं यथाग्निः कुरुपुङ्गवानाम्॥ ८॥ तस्मिंस्तु युद्धे तुमुले प्रवृत्ते पार्थं विकर्णोऽतिरथं रथेन। विपाटवर्षेण कुरुप्रवीरो भीमेन भीमानुजमाससाद॥ ९॥ ततो विकर्णस्य धनुर्व्विकृष्य जाम्बूनदाग्र्योपचितं दृढज्यम्। अपातयत्तं ध्वजमस्य मथ्य छिन्नध्वजः सोऽप्यपयाज्जवेन॥ १०॥ तं शात्रवाणां गणबाधितारं कर्म्माणि कुर्व्वन्तममानुषाणि। शत्रुन्तपः कोपममृष्यमाणः समार्दयच्छूरवर्षेण पार्थम्॥ ११॥ स तेन राज्ञातिरथेन विद्धो विगाहमानो ध्वजिनीं कुरूणाम्। शत्रुन्तपं पञ्चभिराशु विद्ध्वा ततोऽस्य सूतं दशभिर्जघान॥ १२॥ ततः स विद्धो भरतर्षभेण वाणेन गात्रावरणातिगेन। गतासुराजौ निपपात भूमौ नगो नगाग्रादिव वातरुग्णः॥ १३॥ नरर्षभास्तेन

प्रभेण वीरा रणे वीरतरेण भग्ना । चकम्पिरे वातवशेन
काले प्रकम्पितानीव महावनानि ॥ १४ ॥ हतास्तु पार्थेन नर-
वीरा गतासवोर्व्यां सुषुपुः सुवेशाः । वसुप्रदा वासवतुल्यवीर्याः
पराजिता वासवजेन सङ्ख्ये ॥ १५ ॥ सुवर्णकार्ष्णायसवर्मनद्धा
नागा यथा हैमवताः प्रवृद्धाः । तथा स शत्रून् समरे विनिघ्नन्
गाण्डीवधन्वा पुरुषप्रवीरः ॥ १६ ॥ चचार सङ्ख्ये विदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते । प्रकीर्णपर्णानि यथा वसन्ते विशा-
तयित्वा पवनोऽम्बुदांश्च ॥ १७ ॥ तथा सपत्नान् विकिरन् किरीटि
चचार सङ्ख्येऽतिरथो रथेन । शोणाश्ववाहस्य हयान्निहत्य
वैकर्त्तनभ्रातुरदीनसत्त्वः ॥ १८ ॥ एकेन संग्रामजित शरेण शिरो
जहाराशु किरीटमाली । तस्मिन् हते भ्रातरि सूतपुत्रो वैक-
र्त्तनो वीर्यमथाददानः ॥ १९ ॥ प्रगृह्य दन्ताविव नागराजौ मह-
र्षभं व्याघ्र इवाभ्यधावत् । स पाण्डवं द्वादशभिः पृषत्कैर्वैकर्त्तनः
शीघ्रमथो जघान ॥ २० ॥ विव्याध गात्रेषु हयांश्च सर्वान् विराट-
पुत्रञ्च करे निजघ्ने । तमापतन्तं सहसा किरीटी वैकर्त्तनं वै
तरसाभिपत्य ॥ २१ ॥ प्रगृह्य वेगं न्यपतज्जवेन नागं गरुत्मानिव
चित्रपक्षः । तावुत्तमौ सर्वधनुर्द्धराणां महाबलौ सर्वसपत्नसाहौ
॥२२॥ कर्णस्य पार्थस्य निशम्य युद्धं दिदृक्षमाणाः कुरवोऽवतस्थुः ।
स पाण्डवस्तूर्णमुदीर्णकोप कृतागसं कर्णमुदीक्ष्य हर्षात् ॥ २३ ॥
क्षणेन साश्वं सरथं ससूतमन्तर्दधे घोरशरौघवृष्ट्या । ततः
सविद्धाः सरथाः सनागा योधा विनेदुर्भरतर्षभाणाम् ॥ २४ ॥
अन्तर्हिता भीष्ममुखाः महाश्वाः किरीटिना कीर्णरथाः पृषत्कैः ।
तथापि तानर्जुनबाहुमुक्तान् शराञ्छरौघैः प्रतिहत्य वीरः ॥ २५ ॥
तस्थौ महात्मा सधनुः सबाणः सविस्फुलिङ्गाग्निरिवाशु कर्णः ।
ततोऽभवद्वै तलतालशब्दः सशङ्खभेरीपणवप्रणादः ॥ २६ ॥ प्रक्ष्वे-
डितज्यातलनिस्वनन्तं वैकर्त्तनं पूजयतां कुरूणाम् । उद्धूतलाङ्गूल-

महापताकध्वजोत्तमांशाकुलभीषणान्तम् ॥ २७ ॥ गाण्डीवनिर्घोष-
कृतप्रणादं किरीटिनं प्रेक्ष्य ननाद कर्णः । स चापि वैकर्त्तनमर्द्द-
यित्वा साश्वं ससूतं सरथं पृषत्कैः ॥ २८ ॥ तमाववर्ष प्रसभं
किरीटी पितामहं द्रोणकृपौ च दृष्ट्वा । स चापि पार्थं बहुभिः
पृषत्कैर्वैकर्त्तनो मेघ इवाभ्यवर्षत् ॥ २९ ॥ तथैव कर्णश्च किरीट-
माली संच्छादयामास शितैः पृषत्कैः । तयोः सुतीक्ष्णान् सृजतोः
शरौघान् महाशरौघास्त्रविवर्द्धने रणे ॥ ३० ॥ रथे विलग्नाविव
चन्द्रसूर्य्यौ घनान्तरेणानुददर्श लोकः । अथाशुकारी चतुरो
हयांश्च पार्थस्य विव्याध शरैस्तु कर्णः ॥ ३१ ॥ त्रिभिस्तु यन्तार-
ममृष्यमाणो विव्याध तूर्णं त्रिभिरेव केतुम । ततोऽभिविद्धः सम-
रावमर्द्दी प्रबोधितः सिंह इव प्रसुप्त ॥ ३३ ॥ गाण्डीवधन्वा
प्रवरः कुरूणामजिह्मगैः कर्णमियाय जिष्णुः । शरास्त्रवृष्ट्या
निहतो महात्मा प्रादुश्चकारातिमनुष्यकर्म ॥ ३३ ॥ प्राच्छादयत्
कर्णरथं पृषत्कैर्लोकानिमान् सूर्य्य इवांशुजालैः । स हस्तिनेवा-
भिहतो गजेन्द्रः प्रगृह्य भल्लान्निशितान्निषङ्गात् ॥ ३४ ॥ आकर्ण-
पूर्णञ्च धनुर्विकृष्य विव्याध गात्रेष्वथ सूतपुत्रम् । अथास्य बाहूरु-
शिरोललाटं ग्रीवावराङ्गानि परावमर्द्दी ॥ ३५ ॥ शितैश्च बाणै-
र्युधि निर्बिभेद गाण्डीवमुक्तैरशनिप्रकाशैः । स पार्थमुक्तैर्विशिखैः
प्रणुन्नो गजो गजेनेव जितस्तरस्वी । विहाय संग्रामशिरः प्रयातो
वैकर्त्तनः पाण्डववाणतप्तः ॥ ३६ ॥

इति विराटपर्वणि गोहरणपर्वणि कर्णापयाने
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

वैशम्पायन उवाच। अपयाते तु राधेये दुर्य्योधनपुरोगमाः।
अनीकेन तथा स्वेन शनैरार्च्छन्त पाण्डवम्॥ १॥ बहुधा तस्य
सैन्यस्य व्यूढस्यापततः शरैः। अधारयत वेगं स वेलेव तु महो-
दधेः॥ २॥ ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहन। दिव्य-
मस्त्रं प्रकुर्वाणः प्रत्ययाद्रथसत्तम॥ ३॥ यथा रश्मिभिरादित्यः
प्रच्छादयति मेदिनीम्। तथा गाण्डीवनिर्मुक्तैः शरैः पार्थो
दिशो दश॥ ४॥ न रथानां न चाश्वानां न गजानां न वर्मणाम्।
अनिर्विद्धं शितैर्वाणैरासीद्द्व्यङ्गुलमन्तरम्॥ ५॥ दिव्ययोगाच्च
पार्थस्य हयानामुत्तरस्य च। शिक्षाशिल्पोपपन्नत्वादस्त्राणाञ्च परि-
क्रमात्॥ ६॥ वीर्य्यवत्त्वं द्रुतं चाग्र्यं दृष्ट्वा जिष्णोरपूजयन्।
कालाग्निमिव बीभत्सुं निर्द्दहन्तमिव प्रजाः॥ ७॥ नारय प्रेक्षितुं
शेकुर्ज्ज्वलन्तमिव पावकम्। तानि शस्त्राण्यनीकानि रेजुरर्जुन-
मार्गणैः॥ ८॥ शैलं प्रति नवाभ्राणि व्याप्तानीवार्करश्मिभिः।
अशोकानां वनानीव फुल्लानि कुसुमैः शुभैः॥ ९॥ रेजुः पार्थ-
शरैस्तद्वत्तदा सैन्यानि भारत। रजोऽर्जुनशरैः शीर्णं शुष्यत् पुष्पं
हिरण्मयम्॥ १०॥ छत्राणि च पताकाश्च खे दधार सदागतिः।
स्वबलत्रासनात्त्रस्ताः परिपेतुर्दिशो दश॥ ११॥ रथाङ्गदेशा-
नादाय पार्थच्छिन्नयुगा हयाः। कर्णकक्षविषाणेषु अन्तरोष्ठेषु
चैव ह॥ १२॥ मर्म्मस्वङ्गेषु चाहत्यापातयत् समरे गजान्। कौर-
वाग्र्यगजानान्तु शरीरैर्गतचेतसाम्॥ १३॥ क्षणेन संवृता भूमि-
र्मेघैरिव नभस्तलम्। युगान्तसमये सर्वं यथा स्थावरजङ्गमम्॥१४॥
कालहुतवहशेषेण दहत्युग्रशिखः शिखी। तद्वत पार्थो महाराज
ददाह समरे रिपून्॥ १५॥ ततः सर्वास्त्रतेजोभिर्धनुषो निःस्व-
नेन च। शब्देनामानुषाणाञ्च भूतानां ध्वजवासिनाम्॥ १६॥
भैरवं शब्दमत्यर्थं वानरस्य च कुर्वतः। दैवारिपाच्च बीभत्सुस्तस्मि-
न्दौर्य्योधने बले॥ १७॥ भयमुत्पादयामास बलवानरिमर्द्दनः।

रथशक्तिर्मनिवाणां प्राणीव निपतन्भुवि ॥ १८ ॥ सोऽपयात्सहसा
पश्चात् साहस्राश्वाभ्युपेयिवान्। शरव्राते. सुतीक्ष्णाग्रैः समादिष्टैः
खगैरिव ॥ १९ ॥ अर्जुनस्तु खमावव्रे लोहिताग्राननैः खगैः।
अब्रमध्ये यथार्कस्य रश्मयस्तिग्मतेजसः ॥ २० ॥ दिशासु च तथा
राजन्नसङ्ख्याता शरास्तदा। सञ्चेरिवानतं शेकुरथमर्थयितुं परे
॥ २१ ॥ अलब्ध. पुनरश्वैस्तु रथात् सोऽतिप्रपादयेत्। ते शरा
हिट् शरीरेषु यथैव न ससज्जिरे ॥ २२ ॥ हिड्नीकेषु बीभत्सोर्न्न
ससज्जे रथस्तदा। स तद्विक्षोभयामास ग्रसातिबलमञ्जसा ॥२३॥
अमन्तभोगो भुजग क्रीडन्निव महार्णवे। अस्यतो नित्यमत्यर्थं
सर्वमेवातिगस्तथा ॥ २४ ॥ अश्रुत श्रूयते भूतैर्धनुर्घोषः किरी-
टिन.। सन्ततास्तत्र मातङ्गा वाणैरल्पान्तरान्तरे ॥ २५ ॥ संवृता-
स्तेन दृश्यन्ते मेघा इव गभस्तिभिः। दिशोऽनुभ्रमतः सर्वाः सव्य-
दक्षिणमस्यत ॥ २६ ॥ सततं दृश्यते युद्धे सायकासनमण्डलम्।
पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ॥ २७ ॥ नालक्ष्येषु शराः
पेतुस्तथा गाण्डीवधन्वनः। मार्गो गजसहस्रस्य युगपद्गच्छतो
वने ॥ २८ ॥ यथा भवेत्तथा जज्ञे रथमार्गः किरीटिनः। नूनं
पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ॥ २९ ॥ हन्त्यस्मानित्यमन्यन्त
पार्थेन निहता परे। घ्नन्तमत्यर्थमहितान्विजयन्तत्र मेनिरे ॥ ३० ॥
कालमर्जुनरूपेण संहरन्तमिव प्रजा.। कुरुसेनाशरीराणि पार्थे-
नैवाहतान्यपि ॥ ३१ ॥ सेदुः पार्थहतानीव पार्थकर्मानुशासनात्।
ओषधीनां शिरांसीव हिषच्छीर्षाणि सोऽन्वयात्॥ ३२ ॥ अवनेशुः
कुरूणा हि वीर्याण्यर्जुनजाद्भयात। अर्जुनानिलभिन्नानि वना-
न्यर्जुनविद्विषाम् ॥ ३३ ॥ चक्रुर्लोहितधाराभिर्धरणीं लोहिता-
म्बराम्। लोहितेन समायुक्तैः पांशुभिः पवनोद्धतैः ॥ ३४ ॥
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः। साकं खं तत् क्षणेनासीत्
सन्ध्यायामिव लोहितम् ॥ ३५ ॥ अप्यस्तं प्राप्य सूर्योऽपि निव-

र्त्तंत न पाण्डवः। तान् सर्वान् समरे शूर पौरुषे समवस्थितान्
॥ ३६ ॥ द्विव्यैरस्त्रैरचिन्त्यात्मा सर्व्वानाच्छिद्दनुर्द्धरान्। स तु
द्रोणं विंशत्या क्षुरप्राणां समार्पयत् ॥ ३७ ॥ दुःसहं दशभि-
र्वाणैर्द्रौणिमष्टाभिरेव च। दुःशासनं द्वादशभिः कृपं शारद्वतं
त्रिभिः ॥ ३८ ॥ भीष्मं शान्तनवं षष्ट्या राजानं च शतेन ह।
कर्णञ्च कर्णिना कर्णे विव्याध परवीरहा ॥ ३९ ॥ तस्मिन् विद्धे
महेष्वासे कर्णे सर्व्वास्त्रकोविदे। हताश्वसूते विरथे ततोऽनीक-
मभज्यत ॥ ४० ॥ तत प्रभग्नं वलं दृष्ट्वा पार्थमाजिस्थितं पुरः।
अभिप्रायं समाज्ञाय वैराटिः पार्थमब्रवीत् ॥ ४१ ॥

उत्तर उवाच। आस्थाय रुचिरं पार्थ रथं सारथिना मया।
कतमद्यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ ४२ ॥

अर्जुन उवाच। लोहिताश्वमरिष्टं य वैयाघ्रमनुपश्यसि।
नीलां पताकामाश्रित्य रथे तिष्ठन्तमुत्तर ॥ ४३ ॥ कृपस्यैतदनी-
काग्रं प्रापयस्वैतदेव माम्। एतस्य दर्शयिष्यामि शीघ्रास्त्रं दृढ-
धन्विनः ॥ ४४ ॥ कमण्डलुर्ध्वजे यस्य शातकुम्भमयः शुभः।
आचार्य्य एष हि द्रोणः सर्वशस्त्रभृतां वरः ॥ ४५ ॥ सदा ममैष
मान्यस्तु सर्वशस्त्रभृतामपि। सुप्रसन्नं महावीरं कुरुष्वैनं प्रद-
क्षिणम् ॥ ४६ ॥ अत्रैव चावरोहैनमेष धर्मः सनातनः। यदि मे
प्रथमं द्रोणः शरीरे प्रहरिष्यति ॥ ४७ ॥ ततोऽस्य प्रहरिष्यामि
नास्य कोपो भवेदिति। अस्याविदूरे च धनुर्ध्वजाग्रे यस्य दृश्यते
॥ ४८ ॥ आचार्य्यस्यैष पुत्रो वै अश्वत्थामा महारथः। सदा
ममैष मान्यश्च सर्वशस्त्रभृतामपि ॥ ४९ ॥ एतस्य त्वं रथं प्राप्य
निवर्त्तेथाः पुनः पुनः। य एष तु रथानीके सुवर्णकवचावृत ॥ ५० ॥
सेनाग्र्येण तृतीयेन व्यवहार्य्येण तिष्ठति। यस्य नागो ध्वजाग्रे
वै हेमकेतनसंवृतः ॥ ५१ ॥ धृतराष्ट्रसुतः श्रीमानेष राजा सुयो-
धनः। एतस्याभिमुखं वीर रथं पररथारुजम् ॥ ५२ ॥ प्रापय-

श्चैष राजा हि प्रमाथी युद्धदुर्मदः । एष द्रोणस्य शिष्याणां शीघ्रास्त्रे प्रथमो मतः ॥ ५३ ॥ एतस्य दर्शयिष्यामि शीघ्रास्त्रं विपुलं रणे । नागकक्ष्या तु रुचिरा ध्वजाग्रे यस्य तिष्ठति ॥ ५४ ॥ एष वैकर्त्तनः कर्णो विदितः पूर्वमेव ते । एतस्य रथमासाद्य राधेयस्य दुरात्मनः ॥ ५५ ॥ यत्तो भवेथाः संग्रामे स्पर्द्धते हि सदा मया । यस्तु नीलानुसारेण पञ्चतारेण केतुना ॥ ५६ ॥ हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्य्यवान् । यस्य तारार्कचित्रोऽसौ रथे ध्वजवरः स्थितः ॥ ५७ ॥ यस्यैतत् पाण्डुरं छत्रं विमलं मूर्द्धि्न तिष्ठति । महतो रथवंशस्य नानाध्वजपताकिनः ॥ ५८ ॥ बलाहकाग्रे सूर्य्यो वा य एष प्रमुखे स्थितः । हैमचन्द्रार्कसङ्काशं कवचं यस्य दृश्यते ॥ ५९ ॥ जातरूपशिरस्त्राणं मनस्तापयतीव मे । एष शान्तनवो भीष्मः सर्वेषां नः पितामहः ॥ ६० ॥ राजश्रियाभिवृद्धश्च दुर्य्योधनवशानुगः । पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ॥ ६१ ॥ एतेन युध्यमानस्य यत्तः संयच्छ मे हयान् । ततोऽभ्यवहदव्यग्रो वैराटिः सव्यसाचिनम् । यत्रातिष्ठत् कृपो राजन् योत्स्यमानो धनञ्जयम् ॥ ६२ ॥

इति विराटपर्वणि गोहरणपर्वणि उत्तरं प्रति कृपाचार्य्यादीनां परिचयदाने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

वैशम्पायन उवाच । तान्यनीकान्यदृश्यन्त कुरूणामुग्रधन्विनाम् । संसर्पन्तो यथा मेघा घर्मान्ते मन्दमारुताः ॥ १ ॥ अभ्याशे वाजिनस्तस्थुः समारूढाः प्रहारिणः । भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः ॥ २ ॥ महामात्रैः समारूढा विचित्रकवचोज्ज्वलाः । ततः शक्रः सुरगणैः समारुह्य सुदर्शनम् ॥ ३ ॥ सहोपायात्तदा राजन् विश्वाश्विमरुतां गणैः । तद्देवयक्षगन्धर्व-

महोरगसमाकुलम् ॥ ४ ॥ शुशुभेऽभ्रविनिर्मुक्तं ग्रहाणामिव मण्डलम् । अस्त्राणाञ्च बल तेषां मनुष्येषु प्रयुञ्जताम् ॥ ५ ॥ तच्च घोरं महद्युद्धं कृपार्जुनसमागमे । द्रष्टुमभ्यागता देवा विमानैः स्वैः पृथक् पृथक् ॥ ६ ॥ शतं शतसहस्राणां यत्र स्थूणा हिरण्मयी । मणिरत्नमयी चान्या प्रासादमुपधारयत् ॥ ७ ॥ ततः कामगमं दिव्यं सर्वरत्नविभूषितम् । विमानं देवराजस्य शुशुभे खेचरं शुभम् ॥ ८ ॥ तत्र देवास्त्रयस्त्रिंशत्तिष्ठन्ति सहवासवाः । गन्धर्वा राक्षसाः सर्पाः पितरश्च महर्षिभिः ॥ ९ ॥ तथा राजा वसुमना बलाक्षः सुप्रतर्द्दनः । अष्टकश्च शिविश्चैव ययातिर्नहुषो गयः ॥१०॥ मनु पूरूरघुर्भानु कृशाश्व सगरो नल । विमानन्देवराजस्य समदृश्यन्त सुप्रभाः ॥११॥ अग्नेरीशस्य सोमस्य वरुणस्य प्रजापतेः । तथा धातुर्विधातुश्च कुवेरस्य यमस्य च ॥ १२ ॥ अलम्बुषोग्रसेनानां गन्धर्वस्य च तुम्बुरो । यथाभागं यथोद्देशं विमानानि चकाशिरे ॥ १३ ॥ सर्वदेवनिकायाश्च सिद्धाश्च परमर्षयः । अर्जुनस्य कुरूणाञ्च युद्धं द्रष्टुमुपागताः ॥ १४ ॥ दिव्याना तत्र माल्यानां गन्धः पुण्योऽथ सर्वशः । प्रससार वसन्तादौ वृक्षाणामिव पुष्पिणाम् ॥ १५ ॥ आतपत्राणि वासांसि ध्वजाश्च व्यजनानि च । तत्र रत्नानि देवानां समदृश्यन्त तिष्ठताम् ॥ १६ ॥ उपाशाम्यद्रजो भौमं सर्वं व्याप्तं मरीचिभिः । दिव्यान् गन्धानुपादाय वायुर्योधानसेवत ॥ १७ ॥ प्रभासितमिवाकाशं चित्ररूपमलङ्कृतम् । सम्पतद्भिः स्थितैश्चापि नानारत्नावभासितैः ॥ १८ ॥ विमानैर्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः । वज्रभृच्छुशुभे तत्र विमानस्थः सुरैर्वृत ॥ १९ ॥ विभ्रन् माला महातेजाः पद्मोत्पलसमायुताम् । विप्रेक्षमाणो बहुभिर्नातृप्यत् सुतमाते ॥ २० ॥

इति विराटपर्वणि गोहरणपर्वणि देवागमने षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

वैशम्पायन उवाच। दृष्ट्वा व्यूढान्यनीकानि कुरूणां पाण्डु-
नन्दनः। तत्र वैराटिमामन्त्र्य पार्थो वचनमब्रवीत् ॥ १ ॥ जाम्ब-
नदमयी वेदी ध्वजे यस्य प्रदृश्यते। तस्य दक्षिणतो याहि कृपः
शारद्वतो यतः ॥ २ ॥

वैशम्पायन उवाच। धनञ्जयवचः श्रुत्वा वैराटिस्त्वरितस्तदा।
हयान् रजतसङ्काशान् हेमभाण्डानचोदयत् ॥ ३ ॥ आनुपूर्व्यां तु
तत्सर्वं जवमास्थाय चोत्तमम्। प्राहिणोच्चन्द्रसङ्काशान् कुपिता-
निव तान् हयान् ॥ ४ ॥ स गत्वा कुरुसेनायाः समीपं हय-
कोविदः। पुनरावर्त्तयामास तान् हयान् वातरंहसः ॥ ५ ॥
प्रदक्षिणमुपावृत्य मण्डलं सव्यमेव च। कुरून् संमोहयामास
मत्स्यो यानेन तत्त्ववित् ॥ ६ ॥ कृपस्य रथमास्थाय वैराटिरकुतो-
भय। प्रदक्षिणमुपावृत्य तस्थौ तस्याग्रतो बली ॥ ७ ॥ ततो-
ऽर्जुन शङ्खवरं देवदत्तं महास्वनम्। प्रदध्मौ बलमास्थाय नाम
विश्राव्य चात्मनः ॥ ८ ॥ तस्य शब्दो महानासीद्धमायमानस्य
जिष्णुना। तथा वीर्य्यवता सङ्ख्ये पर्वतस्येव दीर्य्यतः ॥ ९ ॥
पूजयाञ्चक्रिरे शङ्खं कुरवः सहसैनिकाः। अर्जुनेन समाध्मातः
शतधा यन्न दीर्य्यते ॥ १० ॥ दिवमावृत्य शब्दस्तु निवृत्तः शुश्रुवे
पुन। सृष्टो मघवता वज्र प्रपतन्निव पर्वते ॥ ११ ॥ एतस्मिन्न-
न्तरे वीरो बलदर्पसमन्वितः। अमृष्यमाणस्तं शब्दं कृपः शार-
द्वतस्तथा ॥ १२ ॥ अर्जुनं प्रति संरब्धो युद्धार्थी स महारथः।
महोदधिजमादाय दध्मौ वेगेन वीर्य्यवान् ॥ १३ ॥ स तु शब्देन
लोकांस्त्रीनावृत्य रथिना वर। धनुरादाय सुमहज्ज्याशब्दमक-
रोत्तदा ॥ १४ ॥ तौ रथौ सूर्य्यसङ्काशौ योत्स्यमानौ महाबलौ।
शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ १५ ॥ ततः शार-
द्वतस्तूर्णं पार्थं दशभिराशुगैः। विव्याध परवीरघ्नं निशितैर्मर्म-
भेदिभि ॥ १६ ॥ पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधम्।

विकृष्य चिक्षेप बहून्नाराचान्मर्म्मभेदिन ॥ १७ ॥ तानप्राप्तांश्छितैर्बाणैर्नाराचान् रक्तभोजनान् । कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः ॥ १८ ॥ ततः पार्थश्च सक्रुद्धश्चित्रान् मार्गान् प्रदर्शयन् । दिशः प्रच्छादयामास बाणौघैः प्रदिशस्तथा ॥ १९ ॥ एकच्छायमिवाकाशमकरोत् सर्वतः प्रभुः । प्राच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ॥ २० ॥ स शरैरर्द्दितः क्रुद्धः शितैरग्निशिखोपमैः । तूर्णं दशसहस्रेण पार्थमप्रतिमौजसम् ॥ २१ ॥ अर्द्दयित्वा महात्मानं ननाद समरे कृपः । ततः कनकपर्वाग्रैर्वीरः सन्नतपर्वभिः ॥ २२ ॥ धनुरादाय विव्याध पार्थं दशभिराशुगैः । त्वरन् गाण्डीवनिर्मुक्तैरर्ज्जुनस्तस्य वाजिनः ॥ २३ ॥ चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत् परमेषुभिः । ते हया निशितैर्विद्धा ज्वलद्भिरिव पावकैः ॥ २४ ॥ उत्पेतुः सहसा सर्वे कृपः स्थानादथाच्यवत् । च्युतञ्चैतमथालोक्य स्थानात् कुन्तीसुतस्तदा ॥ २५ ॥ नाविध्यत परवीरघ्नो रक्षमाणोऽस्य गौरवम् । स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनम् ॥ २६ ॥ विव्याध दशभिर्बाणैस्त्वरितः कङ्कपत्रिभिः । ततः पार्थो धनुस्तस्य भल्लेन निशितेन च ॥ २७ ॥ चिच्छेदैकेन भूयस्तु हस्तावापमथाहरत् । अथास्य कवचं बाणैर्निशितैर्मर्म्मभेदिभिः ॥ २८ ॥ व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत् । तस्य निर्मुच्यमानस्य कवचात् काय आबभौ ॥ २९ ॥ समये मुच्यमानस्य सर्पस्येव तनुर्यथा । छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्म्मुकम् ॥ ३० ॥ चकार गौतमः सज्जं तदद्भुतमिवाभवत् । स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्वणा ॥ ३१ ॥ एवमन्यानि चापानि बहूनि कृतहस्तवत् । शारद्वतस्य चिच्छेद पाण्डवः परवीरहा ॥ ३२ ॥ स छिन्नधनुरादाय रथाच्छक्तिं प्रतापवान् । प्राहिणोत् पाण्डुपुत्राय प्रदीप्तामशनीमिव ॥ ३३ ॥ तामर्ज्जुनस्तदायान्तीं शक्तिं हेमविभूषिताम् । वियद्गतां महोल्काभां चिच्छेद दशभिः

शरैः ॥ ३४ ॥ सापतद्धनुषा छिन्ना भूमौ पार्थेन धीमता । युग-
पच्चैव भल्लैस्तु ततः सन्न्यधत्त कृपः ॥ ३५ ॥ तमाशु निशितैः
पार्थं बिभेद दशभिः शरैः । ततः पार्थो महातेजा विशिखा-
नग्नितेजसः ॥ ३६ ॥ चिक्षेप समरे क्रुद्धस्त्रयोदश शिलाशितान् ।
अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ॥ ३७ ॥ षष्ठेन च शिरः
कायाच्छुरेण रथसारथेः । त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षं महा-
रथः ॥ ३८ ॥ द्वादशेन तु भल्लेन चकर्त्तास्य ध्वजोत्तमम् । ततो
वज्रनिकाशेन फाल्गुनः प्रहसन्निव ॥ ३९ ॥ त्रयोदशेनेन्द्रसमः कृपं
वक्षस्यविध्यत । स छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ ४० ॥
गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदाम् । सा च मुक्ता गदा
गुर्वी कृपेण सुपरिष्कृता ॥ ४१ ॥ अर्जुनेन शरैर्नुन्ना प्रतिमार्ग-
मथागमत् । ततो योधाः परीप्सन्तः शारद्वतममर्षणम् ॥ ४२ ॥
सर्वतः समरे पार्थं शरवर्षैरवाकिरन् । ततो विराटस्य सुतः
सव्यमावृत्य वाजिनः ॥ ४३ ॥ यमकं मण्डलं कृत्वा तान् योधान्
प्रत्यवारयत् । ततः कृपमुपादाय विरथं ते नरर्षभाः । अप-
जग्मुर्महावेगाः कुन्तीपुत्राद्धनञ्जयात् ॥ ४४ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि कृपापयाने
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

वैशम्पायन उवाच । कृपेऽपनीते द्रोणस्तु प्रगृह्य सशरं धनुः ।
अभ्यद्रवदनाधृष्यः शोणाश्वः श्वेतवाहनम् ॥ १ ॥ स तु रुक्मरथं
दृष्ट्वा गुरुमायान्तमन्तिकात् । अर्जुनो जयतां श्रेष्ठ उत्तरं वाक्य-
मब्रवीत् ॥ २ ॥

अर्जुन उवाच । यत्रैषा काञ्चनी वेदी ध्वजे यस्य प्रकाशते ।
उच्छ्रिता प्रवरे दण्डे पताकाभिरलङ्कृता ॥ ३ ॥ तत्र मा वह

भद्रं ते द्रोणानीकाय सारथे। अश्वाः शोणाः प्रकाशन्ते वृहन्तश्चारुवाहिनः ॥ ४ ॥ स्निग्धविद्रुमसङ्काशास्ताम्रास्या प्रियदर्शना। युक्ता रथवरे यस्य सर्व्वशिक्षाविशारदाः ॥ ५ ॥ दीर्घबाहुर्महातेजा बलरूपसमन्वित । सर्व्वलोकेषु विक्रान्तो भारद्वाजः प्रतापवान् ॥ ६ ॥ बुद्ध्या तुल्यो ह्युशनसा वृहस्पतिसमो नये। वेदास्तथैव चत्वारो ब्रह्मचर्य्यं तथैव च ॥ ७ ॥ ससंहाराणि सर्व्वाणि दिव्यान्यस्त्राणि मारिष। धनुर्व्वेदश्च कार्त्स्न्येन यस्मिन्नित्यं प्रतिष्ठितः ॥ ८ ॥ क्षमा दमश्च सत्यञ्च आनृशंस्यमथार्जवम्। एते चान्ये च बहवो यस्मिन्नित्यं द्विजे गुणाः ॥ ९ ॥ तेनाहं योद्धुमिच्छामि महाभागेन संयुगे। तस्मात्तं प्रापयाचार्य्यं क्षिप्रमुत्तर वाहय ॥ १० ॥

वैशम्पायन उवाच। अर्ज्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषणान्। चोदयामास तानश्वान् भारद्वाजरथं प्रति ॥ ११ ॥ तमापतन्तं वेगेन पाण्डवं रथिनां वरम्। द्रोण प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपम् ॥ १२ ॥ ततः प्राध्मापयच्छङ्खं भेरीशतनिनादिनम्। प्रचुक्षुभे बलं सर्व्वमुद्धूत इव सागर. ॥ १३ ॥ अथ शोणान् सदश्वास्तान् हंसवर्णैर्मनोजवै.। मिश्रितान् समरे दृष्ट्वा व्यस्मयन्त रणे नरा ॥ १४ ॥ तौ रथौ वीर्य्यसम्पन्नौ दृष्ट्वा संग्राममूर्द्धनि। आचार्य्यशिष्यावजितौ कृतविद्यौ मनस्विनौ ॥ १५ ॥ समाश्लिष्टौ तदान्योन्यं द्रोणपार्थौ महाबलौ। दृष्ट्वा प्राकम्पत मुहुर्भरतानां महद्बलम् ॥ १६ ॥ हर्षयुक्तस्तत पार्थ प्रहसन्निव वीर्य्यवान्। रथं रथेन द्रोणस्य समासाद्य महारथ. ॥ १७ ॥ अभिवाद्य महाबाहु सामपूर्व्वमिदं वच.। उवाच श्लक्ष्णया वाचा कौन्तेय. परवीरहा ॥ १८ ॥ उषिताः स्मो वने वासं प्रतिकर्म चिकीर्षवः। कोपं नार्हसि नः कर्त्तुं सदा समयचारिणाम् ॥ १९ ॥ अहन्तु प्रहृते पूर्व्वं प्रहरिष्यामि तेऽनघ। इति द्रोणेन ... बुद्धिस्तद्भवान् कर्त्तु-

मर्हति ॥ २० ॥ ततोऽस्मै प्राहिणोत् द्रोणः शरानग्निशिखोपमान्
अप्राप्तानेव तान् पार्थश्चिच्छेद कृतहस्तवत् ॥ २१ ॥ ततः शर
सहस्रेण रथं पार्थस्य वीर्य्यवान् । अवाकिरत्ततो द्रोणः शीघ्र
मस्त्रं विदर्शयन् ॥ २२ ॥ हयांश्च रजतप्रख्यान् कङ्कपत्रैः शिला
शितैः । अवाकिरदमेयात्मा पार्थं सङ्कोपयन्निव ॥ २३ ॥ एवं
प्रववृते युद्धं भारद्वाजकिरीटिनोः । समं विमुञ्चतोः सङ्ख्ये विशि-
खान् दीप्ततेजसः ॥ २४ ॥ तावुभौ ख्यातकर्माणावुभौ वायुसमौ
जवे । उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ ॥ २५ ॥ क्षिपन्तौ
शरजालानि मोहयामासतुर्नृपान् । व्यस्मयन्त ततो योधा ये
तत्रासन् समागताः ॥ २६ ॥ शरान् विसृजतोस्तूर्णं साधु साध्वि-
त्यपूजयन् । द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फाल्गुनात्
॥ २७ ॥ रौद्रः क्षत्रियधर्म्मोऽयं गुरुणा यदयुध्यत । इत्यब्रुवन्
जनास्तत्र सङ्ग्रामशिरसि स्थिताः ॥ २८ ॥ वीरौ तावभिसंरब्धौ
सन्निकृष्टौ महाभुजौ । छादयेतां शरव्रातैरन्योऽन्यमपराजितौ
॥ २९ ॥ विस्फार्य्य सुमहच्चापं हेमपृष्ठं दुरासदम् । भारद्वाजोऽथ
संरब्धः फाल्गुनं प्रत्यविध्यत ॥ ३० ॥ स सायकमयैर्जालैरर्जु-
नस्य रथं प्रति । भानुमद्भिः शिलाधौतैर्भानोराच्छादयत प्रभाम्
॥ ३१ ॥ पार्थञ्च सुमहाबाहुर्महावेगैर्महारथः । विव्याध निशितै-
र्बाणैर्मेघो वृष्टेव पर्वतम् ॥ ३२ ॥ तथैव दिव्यं गाण्डीवं धनु-
रादाय पाण्डवः । शत्रुघ्नं वेगवान् हृष्टो भारसाधनमुत्तमम्
॥ ३३ ॥ विससर्ज शरांश्चित्रान् सुवर्णविकृतान् बहून् । नाशय-
ञ्छरवर्षाणि भारद्वाजस्य वीर्य्यवान् ॥ ३४ ॥ तूर्णं चापविनि-
र्मुक्तैस्तदद्भुतमिवाभवत् । स रथेन चरन् पार्थः प्रेक्षणीयो धन-
ञ्जयः ॥ ३५ ॥ युगपद्दिक्षु सर्व्वासु सर्व्वतोऽस्त्राण्यदर्शयत । एक-
च्छायमिवाकाशं बाणैश्चक्रे समन्ततः ॥ ३६ ॥ नादृश्यत तदा
द्रोणो नीहारेणेव संवृतः । तत्र संवृतस्य शरा-
छिन्नो यदा
भिरलङ्कृता ॥

त्तमैः ॥ ३७ ॥ जाज्वल्यमानस्य तदा पर्वतस्येव सर्वतः। दृष्ट्वा तु पार्थस्य रणे शरैः स्वरथमावृतम् ॥ ३८ ॥ स विस्फार्य्य धनुःश्रेष्ठ मेघस्तनितनिस्वनम्। अग्निचक्रोपमं घोरं व्यकर्षत परमायुधम् ॥ ३९ ॥ व्यपातयच्छरांस्तीक्ष्णान् द्रोणः समितिशोभनः। महानभूत्ततः शब्दो वंशानामिव दह्यताम् ॥ ४० ॥ जाम्बूनदमयैः पुङ्खैश्चित्रचापविनिर्गतैः। प्राच्छादयदमेयात्मा दिशः सूर्य्यस्य च प्रभाम् ॥ ४१ ॥ तत्र कनकपुङ्खानां शराणां नतपर्व्वणाम्। वियच्चराणां वियति दृश्यन्ते बहवो व्रजाः ॥ ४२ ॥ द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात्। एको दीर्घ इवादृश्यदाकाशे संहतः शरः ॥ ४३ ॥ एवं तौ स्वर्णविकृतान्विमुञ्चन्तौ महाशरान्। आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ४४ ॥ शरास्तयोस्तु विबभुः कङ्कबर्हिणवाससः। पङ्क्तयः शरदि खस्थानां हंसानां चरतामिव ॥ ४५ ॥ युद्धं समभवत्तत्र सुसंरब्धं महात्मनोः। द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव ॥ ४६ ॥ तौ गजाविव चासाद्य विषाणाग्रैः परस्परम्। शरैः पूर्णायतोत्सृष्टैरन्योऽन्यमभिजघ्नतुः ॥ ४७ ॥ तौ व्यवाहरतां युद्धे संरब्धौ रणशोभिनौ। उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः ॥ ४८ ॥ अथ त्वाचार्य्यमुख्येन शरान् सृष्टान् शिलाशितान्। न्यवारयच्छितैर्बाणैरर्जुनो जयतां वरः ॥ ४९ ॥ दर्शयन् वीक्षमाणानामस्त्रमुग्रपराक्रमः। इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ॥ ५० ॥ जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसम्। आचार्य्यमुख्यः समरे द्रोणः शस्त्रभृताम्वरः ॥ ५१ ॥ अर्जुनेन सहाक्रीड़च्छरैः सन्नतपर्व्वभिः। दिव्यान्यस्त्राणि मुञ्चन्तं भारद्वाजो महारणे ॥ ५२ ॥ अस्त्रैरस्त्राणि संवार्य्य फाल्गुनं समयोधयत्। तयोरासीत सम्प्रहारः क्रुद्धयोर्नरसिंहयोः ॥ ५३ ॥ अमर्षिणोस्तदाऽन्योऽन्यं देवदानवयोरिव। ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ॥ ५४ ॥ द्रोणेन मुक्तमात्रन्तु ग्रसति स्म पुनः

पुनः। एवं भूरी महेष्वासौ विसृजन्तौ शिताङ्कुरान् ॥ ५५ ॥
एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः। तत्रार्जुनेन मुक्तानां
पततां वै शरीरिषु ॥ ५६ ॥ पर्वतेष्विव वज्राणां शराणां श्रूयते
स्वनः। ततो नागा रथाश्चैव वाजिनश्च विशाम्पते ॥ ५७ ॥ शोणि-
ताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः। बाहुभिश्च सकेयूरैर्विचि-
त्रैश्च महारथैः ॥ ५८ ॥ सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः
योधैश्च निहतैस्तत्र पार्थबाणप्रपीड़ितैः ॥ ५९ ॥ बलमासीत्समु
द्भ्रान्तं द्रोणार्जुनसमागमे। विधुन्वानौ तु तौ तत्र धनुषी भार-
साधने ॥ ६० ॥ आच्छादयेतामन्योऽन्यं सतघ्नन्तौ महेषुभिः। तयोः
समभवद्युद्धन्तुमुलं भरतर्षभ ॥ ६१ ॥ द्रोणकौन्तेययोस्तत्र बलि-
वासवयोरिव। अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्वभिः ॥ ६२ ॥
व्यदारयेतामन्योऽन्यं प्राणद्यूते प्रवर्त्तिते। अथान्तरीक्षे नादो-
ऽभूत द्रोण तत्र प्रशंसताम् ॥ ६३ ॥ दुष्करं कृतवान् द्रोणो
यदर्जुनमयोधयत्। प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम्
॥ ६४ ॥ जेतारं देवदैत्यानां सर्वेषाञ्च महारथम्। अविभ्रमञ्च
शिक्षाञ्च लाघवं दूरपातिताम् ॥ ६५ ॥ पार्थस्य समरे दृष्ट्वा द्रोण-
स्याभूच्च विस्मयः। अथ गाण्डीवमुद्यम्य दिव्य धनुरमर्षणः ॥६६॥
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ। तस्य बाणमयं वर्षं
शलभानामिवायतिम् ॥ ६७ ॥ दृष्ट्वा ते विस्मिताः सर्वे साधुसाध्वि-
त्यपूजयन्। न च बाणान्तरे वायुरस्य शक्नोति सर्पितुम् ॥ ६८ ॥
अनिशं सन्दधानस्य शरानुत्सृजतस्तथा। ददर्श नान्तरं कश्चित्
पार्थस्याददतोऽपि च ॥ ६९ ॥ तथा शीघ्रास्त्रयुद्धे तु वर्त्तमाने
सुदारुणे। शीघ्रं शीघ्रतरं पार्थः शरानन्यानुदीरयत् ॥ ७० ॥
ततः शतसहस्राणि शराणां नतपर्वणाम्। युगपत् प्रापतंस्तत्र
द्रोणस्य रथमन्तिकात् ॥ ७१ ॥ आकीर्य्यमाणे द्रोणे तु शरै-
र्गाण्डीवधन्वना। हाहाकारो महानासीत्सैन्यानां भरतर्षभ ॥७२॥

पाण्डवस्य तु शीघ्रास्त्रं मघवान् प्रत्यपूजयत् । गन्धर्व्वाप्सरसश्चैव ये च तत्र समागताः ॥ ७३ ॥ ततो वृन्देन महता रथानां रथयूथपः । आचार्य्यपुत्रः सहसा पाण्डवं प्रत्यवारयत् ॥ ७४ ॥ अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः । पूजयामास पार्थस्य कोपञ्चास्याकरोद्भृशम् ॥ ७५ ॥ स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे । किरंश्शरसहस्राणि पर्ज्जन्य इव वृष्टिमान् ॥ ७६ ॥ आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो हयान् । अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ७७ ॥ स तु लब्ध्वान्तरं तूर्णं व्यपायाज्जवनैर्हयैः । छिन्नवर्म्मध्वजः शूरो निकृत्तः परमेषुभिः ॥ ७८ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि द्रोणापयाने अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

वैशम्पायन उवाच । ततो द्रौणिर्म्महाराज प्रययावर्ज्जुनं रणे । तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतम् ॥ १ ॥ शरजालेन महता वर्षमाणमिवाम्बुदम् । तयोर्द्देवासुरसमः सन्निपातो महानभूत् ॥ २ ॥ किरतोः शरजालानि वृत्रवासवयोरिव । न स्म सूर्य्यस्तदा भाति न च वाति समीरणः ॥ ३ ॥ शरजालावृते व्योम्नि छायाभूते समन्ततः । महान् चटचटाशब्दो योधयोर्हन्यमानयोः ॥ ४ ॥ दह्यतामिव वेणूनामासीत्परपुरञ्जय । हयानस्यार्ज्जुनः सर्वान् कृतवानल्पजीवितान् ॥ ५ ॥ ते राजन्नप्रजानन्त दिशं काञ्चन मोहिताः । ततो द्रौणिर्म्महावीर्य्यः पार्थस्य विचरिष्यतः ॥ ६ ॥ विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह । तदस्यापूजयन् देवाः कर्म दृष्ट्वातिमानुषम् ॥ ७ ॥ द्रोणो भीष्मश्च कर्णश्च कृपश्चैव महारथः । साधुसाध्विति भाषन्तोऽपूजयन् कर्म तस्य तत् ॥ ८ ॥

ततो द्रौणिर्धनुःश्रेष्ठमपकृष्य रथर्षभम्। पुनरेवाहनत पार्थं हृदये कङ्कपत्रिभिः ॥ ९ ॥ ततः पार्थो महाबाहुः प्रहस्य स्वनवत्तदा। योजयामास नवया मौर्व्या गाण्डीवमोजसा ॥ १० ॥ ततोऽर्द्धचन्द्रमावृत्य तेन पार्थः समागमत। वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ ११ ॥ ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः। रणमध्ये द्वयोरेव सुमहल्लोमहर्षणम् ॥ १२ ॥ तौ वीरौ ददृशुः सर्वे कुरवो विस्मयान्विताः। युध्यमानौ महावीर्य्यौ यूथपाविव सङ्गतौ ॥१३॥ तौ समाजघ्नतुर्वीरावन्योऽन्यं पुरुषर्षभौ। शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः ॥ १४ ॥ अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः। तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ॥ १५ ॥ अश्वत्थाम्नः पुनर्वाणाः क्षिप्रमभ्यस्यतो रणे। जग्मुः परिक्षयं तूर्णमभूत्तेनाधिकोऽर्ज्जुनः ॥ १६ ॥ ततः कर्णो महाचापं विकृष्याभ्यधिकं तथा। अवाक्षिपत्ततः शब्दो हाहाकारो महानभूत् ॥१७॥ ततश्चक्षुर्द्दधे पार्थो यत्र विस्फार्य्यते धनुः। ददर्श तत्र राधेयं तस्य कोपो व्यवर्द्धत ॥ १८ ॥ स रोषवशमापन्नः कर्णमेव जिघांसया। तमैक्षत विवृत्ताभ्यां नेत्राभ्यां कुरुपुङ्गव ॥ १९ ॥ तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकान्। त्वरिताः पुरुषा राजन्नुपाजह्रुः सहस्रशः ॥ २० ॥ उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनञ्जयः। अभिदुद्राव सहसा कर्णमेव सपत्नजित् ॥ २१ ॥ तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः। कामयन् द्वैरथं तेन युद्धं वचनमब्रवीत् ॥ २२ ॥

इति विराटपर्वणि गोहरणपर्वणि अर्ज्जुनाश्वत्थामयुद्धे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

अर्जुन उवाच । कर्ण यत्ते सभामध्ये बहु वाचा विकत्थितम् ।
न मे युधि समोऽस्तीति तदिदं समुपस्थितम् ॥ १ ॥ सोऽद्य कर्ण
मया सार्द्धं व्यवहृत्य महामृधे । ज्ञास्यसे बलमात्मीय न चान्या-
नवमन्यसे ॥ २ ॥ अवोचः परुषा वाचो धर्ममुत्सृज्य केवलम् ।
इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितम् ॥ ३ ॥ यत्त्वया कथितं
पूर्वं मामनासाद्य किञ्चन । तदद्य कुरु राधेय कुरुमध्ये मया सह
॥ ४ ॥ यत्सभायां स पाञ्चालीं क्लिश्यमानां दुरात्मभिः । दृष्ट-
वानसि तस्याद्य फलमाप्नुहि केवलम् ॥ ५ ॥ धर्मपाशनिबद्धेन
यन्मया मर्षितं पुरा । तस्य राधेय कोपस्य विजयं पश्य मे मृधे
॥ ६ ॥ वने द्वादशवर्षाणि यानि सोढानि दुर्मते । तस्याद्य प्रति-
कोपस्य फलमाप्नुहि केवलम् ॥ ७ ॥ एहि कर्ण मया सार्द्धं प्रति-
युध्यस्व सङ्गरे । प्रेक्षकाः कुरवः सर्व्वे भवन्तु तव सैनिकाः ॥ ८ ॥

कर्ण उवाच । ब्रवीषि वाचा यत्पार्थ कर्म्मणा तत्समाचर ।
अतिशेते हि ते वाक्यं कर्म्मैतत् प्रथितं भुवि ॥ ९ ॥ यत्त्वया मर्षितं
पूर्वं तदशक्तेन मर्षितम् । इतो गृह्णीमहे पार्थ तव दृष्ट्वा परा-
क्रमम् ॥ १० ॥ धर्मपाशनिबद्धेन यत्त्वया मर्षितं पुरा । तथैव
बद्धमात्मानमबद्धमिव मन्यसे ॥ ११ ॥ यदि तावद्वने वासो यथोक्त-
श्चरितस्त्वया । तत्त्वं धर्मार्थवित् क्लिष्टः स मया योद्धुमिच्छसि
॥ १२ ॥ यदि शक्रः स्वयं पार्थ युध्यते तव कारणात् । तथापि न
व्यथा काचिन्मम स्याद्विक्रमिष्यतः ॥ १३ ॥ अयं कौन्तेय कामस्ते
न चिरात् समुपस्थितः । योत्स्यसे हि मया सार्द्धमद्य द्रक्ष्यसि
मे बलम् ॥ १४ ॥

अर्जुन उवाच । इदानीमेव तावत्त्वमपयातो रणान्मम । तेन
जीवसि राधेय निहतस्त्वनुजस्तव ॥ १५ ॥ भ्रातरं घातयित्वा
कस्त्यक्त्वा रणशिरश्च कः । त्वदन्यः कः पुमान् सत्सु ब्रूयादेवं
व्यवस्थितः ॥ १६

वैशम्पायन उवाच। इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः।
अभ्ययाद्विसृजन् बाणान् कायावरणभेदिनः॥ १७॥ प्रतिजग्राह
तं कर्णः प्रीयमाणो महारथः। महता शरवर्षेण वर्षमाणमिवा-
म्बुदम्॥ १८॥ उत्पेतुः शरजालानि घोररूपाणि सर्वशः।
अविध्यदश्वान् बाह्वोश्च हस्तावापं पृथक् पृथक्॥ १९॥ सोऽमृष्य-
माणः कर्णस्य निषङ्गस्यावलम्बनम्। चिच्छेद निशिताग्रेण शरे-
णानतपर्वणा॥ २०॥ उपासङ्गादुपादाय कर्णो बाणानथापरान्।
विव्याध पाण्डवं हस्ते तस्य मुष्टिरशीर्य्यत॥ २१॥ ततः पार्थो
महाबाहुः कर्णस्य धनुरच्छिनत्। स शक्तिं प्राहिणोत्तस्मै तां
पार्थो व्यधमच्छरैः॥ २२॥ ततो निपेतुर्बहवो राधेयस्य पदा-
नुगाः। तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम्॥ २३॥
ततोऽस्याश्वाञ्छरैस्तीक्ष्णैर्बीभत्सुर्भारसाधनैः। आकर्णमुक्तैरहनत्
ते हताः प्रापतन् भुवि॥ २४॥ अथापरेण बाणेन ज्वलितेन
महौजसा। विव्याध कर्णं कौन्तेयस्तीक्ष्णेनोरसि वीर्य्यवान्॥ २५॥
तस्य भित्त्वा तनुत्राणं कायमभ्यगमच्छरः। ततः स तमसाविष्टो
न स्म किञ्चित् प्रजज्ञिवान्॥ २६॥ स गाढवेदनो हित्वा रणं
प्रायादुदङ्मुखः। ततोऽर्जुन उदक्रोशदुत्तरश्च महारथः॥ २७॥

इति विराटपर्व्वणि गोहरणपर्व्वणि कर्णापयाने
षष्टितमोऽध्यायः॥ ६०॥

---

वैशम्पायन उवाच। ततो वैकर्त्तनं जित्वा पार्थो वैराटिमब्र-
वीत्। एतन्मां प्रापयानीकं यत्र तालो हिरण्मयः॥ १॥ यत्र
शान्तनवो भीष्मो रथेऽस्माकं पितामहः। काङ्क्षमाणो मया युद्धं
तिष्ठत्यमरदर्शनः॥ २॥ अथ सैन्यं महद्दृष्ट्वा रथनागहयाकुलम्।
अब्रवीदुत्तरः पार्थमपविद्धः शरैर्भृशम्॥ ३॥ नाहं शक्ष्यामि

वीरेह नियन्तुं ते हयोत्तमान्। विषीदन्ति मम प्राणा मनो विह्वलतीव मे ॥ ४ ॥ अस्त्राणामिह दिव्यानां प्रभावात् सम्प्रयुज्यताम्। त्वया च कुरुभिश्चैव द्रवन्तीव दिशो दश: ॥ ५ ॥ गन्धेन मूर्च्छितश्चाहं वसारुधिरमेदसाम्। द्वैधीभूतं मनो मेऽद्य तव चैव प्रपश्यतः ॥ ६ ॥ अदृष्टपूर्व्वं शूराणां मया सङ्ख्ये समागम। गदापातेन महता शङ्खाना निस्वनेन च ॥ ७ ॥ सिंहनादैश्च शूराणां गजानां वृंहितैस्तथा। गाण्डीवशब्देन भृशमशनिप्रतिमेन च ॥ ८ ॥ श्रुतिः स्मृतिश्च मे वीर प्रनष्टाः मूढचेतस.। अलातचक्रप्रतिमं मण्डलं सततं त्वया ॥ ९ ॥ व्याक्षिप्यमाणं समरे गाण्डीवञ्च प्रकर्षत। दृष्टि. प्रचलिता वीर हृदयं दीर्य्यतीव मे ॥ १० ॥ वपुश्चोग्रं तव रणे क्रुद्धस्येव पिनाकिनः। व्यायच्छत शरान् घोरान् दृष्ट्वा भीर्मे भवत्यपि ॥ ११ ॥ नाददानं न सन्धानं न मुञ्चन्तं शरोत्तमान्। त्वामहं न प्रपश्यामि पश्यन्नपि विचेतन· ॥ १२ ॥ अवसीदन्ति मे प्राणा भूरियं चलतीव च। न च प्रतोदं रश्मींश्च संयन्तुं शक्तिरस्ति मे ॥ १३ ॥

अर्ज्जुन उवाच। मा भैषी स्तम्भयात्मानं त्वयापि नरपुङ्गव। अत्यद्भुतानि कर्म्माणि कृतानि रणमूर्द्धनि ॥ १४ ॥ राजपुत्रोऽसि भद्रन्ते कुले मत्स्यस्य विश्रुते। जातस्त्वं शत्रुदमने न विषीदितुमर्हसि ॥ १५ ॥ धृतिं कृत्वा सुविपुलां राजपुत्र रथे पुन.। युध्यमानस्य समरे हयान् संयच्छ शत्रुहन् ॥ १६ ॥

वैशम्पायन उवाच। एवमुक्त्वा महाबाहुर्वैराटिं नरसत्तम। अर्ज्जुनो रथिनां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ॥ १७ ॥ सेनाग्रमाशु भीष्मस्य प्रापयस्वैतदेव माम्। आच्छेत्स्याम्यहमेतस्य धनुर्ज्यामपि चाहवे ॥ १८ ॥ अस्यन्तं दिव्यमस्त्रं मां चित्रमद्य निशामय। शतह्रदामिवायान्तीं स्तनयित्नोरिवाम्बरे ॥ २० ॥ सुवर्णपृष्ठं गाण्डीवं द्रक्ष्यन्ति कुरवो मम। दक्षिणेनाथ वामेन कतरेण

च्छिद्रस्यति ॥ २१ ॥ इति मा सङ्गता सर्वे तर्कयिष्यन्ति शत्रवः - शोणितोदां रथावर्त्तां नागनक्रान्दुरत्ययाम् ॥ २२ ॥ नदीं प्रस्कन्दयिष्यामि परलोकप्रवाहिनीम् । पाणिपादशिरःपृष्ठबाहुशाखानिरन्तरम् ॥ २३ ॥ वनं कुरूणां छेत्स्यामि शरैः सन्नतपर्वभिः । जयतः कौरवीं सेनामेकस्य मम धन्विनः ॥ २४ ॥ शतं मार्गा भविष्यन्ति पावकस्येव कानने । मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ॥ २५ ॥ इष्वस्त्रे शिक्षितं चित्रमहं दर्शयितास्मि ते । असम्भ्रान्तो रथे तिष्ठ समेषु विषमेषु च ॥ २६ ॥ दिवमावृत्य तिष्ठन्तं गिरिं भिन्द्यां स्म पत्रिभिः । अहमिन्द्रस्य वचनात् सङ्ग्रामेऽभ्यहनं पुरा ॥ २७ ॥ पौलोमान् कालकञ्जांश्च सहस्राणि शतानि च । अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः कृतहस्तताम् ॥ २८ ॥ प्रगाढं तुमुलं चित्रमस्यमिन्द्रं प्रजापतेः । अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ॥ २९ ॥ जित्वा षष्टिं सहस्राणि रथिनामुग्रधन्विनाम् । शीर्य्यमाणानि तूलानि प्रवृद्धेनेव वायुना ॥ ३० ॥ मया कुरूणां वृन्दानि पात्यमानानि पश्य वै । ध्वजवृक्षं पत्तितृणं रथिसिंहगणायुतम् ॥ ३१ ॥ वनमादीपयिष्यामि कुरूणामस्त्रतेजसा । तानहं रथनीडेभ्यः शरैः सन्नतपर्वभिः ॥ ३२ ॥ पत्तीन् सर्वाननिबलान् योत्स्यमानानवस्थितान् । एकः सङ्कालयिष्यामि वज्रपाणिरिवासुरान् ॥ ३३ ॥ रौद्रं रुद्रादहं ह्यस्त्रं वरुणादपि वारुणम् । अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः । वज्रादीनि तथास्त्राणि शक्रादहमवाप्तवान् ॥ ३४ ॥ धार्त्तराष्ट्रं वनं घोरं नरसिंहाभिरक्षितम् । अहमुत्पाटयिष्यामि वैराटे व्येतु ते भयम् ॥ ३५ ॥

वैशम्पायन उवाच । एवमाश्वासितस्तेन वैराटिः सव्यसाचिना । व्यवगाहद्रथानीकं भीमं भीष्माभिरक्षितम् ॥ ३५ ॥ तमायान्तं महाबाहुं जिगीषन्तं रणे कुरून् । अभ्यवारयदव्यग्रः क्रूरकर्मा-

पगासुतः ॥ ३७ ॥ तस्य जिष्णुरुपावृत्य ध्वजं मूलादपातयत् । विकृष्य कलधौताग्रैः स विद्धः प्रापतद्भुवि ॥ ३८ ॥ तं चित्रमाल्याभरणाः कृतविद्या मनस्विनः । आगच्छन् भीमधन्वानं चत्वारश्च महाबलाः ॥ ३९ ॥ दुःशासनो विकर्णश्च दुःसहोऽथ विविंशतिः । आगत्य भीमधन्वानं बीभत्सुं पर्य्यवारयन् ॥ ४० ॥ दुःशासनस्तु भल्लेन विध्वा वैराटिमुत्तरम् । द्वितीयेनार्जुनं वीरः प्रत्यविध्यत् स्तनान्तरे ॥ ४१ ॥ तस्य जिष्णुरुपावृत्य पृथुधारेण कार्मुकम् । चकर्त्त गार्द्धपत्रेण जातरूपपरिष्कृतम् ॥ ४२ ॥ अथैनं पञ्चभिः पश्चात् प्रत्यविध्यत् स्तनान्तरे । सोऽपयातो रणं हित्वा पार्थबाणप्रपीड़ितः ॥ ४३ ॥ तं विकर्णः शरैस्तीक्ष्णैर्गार्द्धपत्रैरजिह्मगैः । विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः ॥ ४४ ॥ ततस्तमपि कौन्तेयः शरेणानतपर्व्वणा । ललाटेऽभ्यहनत्तूर्णं स विद्धः प्रापतद्रथात् ॥ ४५ ॥ ततः पार्थमभिद्रुत्य दुःसहः सविविंशतिः । अवाकिरच्छरैस्तीक्ष्णैः परीप्सुर्भ्रातरं रणे ॥ ४६ ॥ तावुभौ गार्द्धपत्राभ्यां निशिताभ्यां धनञ्जयः । विद्धा युगपदव्यग्रस्तयोर्वाहानसूदयत् ॥ ४७ ॥ तौ हताश्वौ विभिन्नाङ्गौ धृतराष्ट्रात्मजावुभौ । अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ॥ ४८ ॥ सर्व्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः । किरीटमाली कौन्तेयो लब्धलक्षो महाबलः ॥ ४९ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि अर्जुनदुःशासनादियुद्धे एकषष्टोऽध्यायः ॥ ६१ ॥

---

वैशम्पायन उवाच । अथ सङ्गम्य सर्व्वे ते कौरवाणां महारथाः । अर्जुनं सहिता यत्ताः प्रत्यविध्यन्त भारत ॥ १ ॥ स सायकमयैर्ज्जालैः सर्व्वतस्तान्महारथान् । प्राच्छादयदमेयात्मा नीहारेणेव पर्व्वतान् ॥ २ ॥ नदद्भिश्च महानागैर्ह्रेषमाणैश्च

वाजिभिः ।, भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ॥ ३ ॥
नागाश्वकायान्निर्भिद्य लौहानि कवचानि च । पार्थस्य शर-
जालानि विनिष्पेतुः सहस्रशः ॥ ४ ॥ त्वरमाणः शरानस्यन् पाण्डवः
प्रबभौ रणे । मध्यन्दिनगतोऽर्चिष्मान् शरदीव दिवाकरः ॥ ५ ॥
उपप्लवन्ति वित्रस्ता रथेभ्यो रथिनस्तथा । सादिनश्चाश्वपृष्ठेभ्यो
भूमौ चैव पदातय ॥ ६ ॥ शरैः संछिद्यमानानां कवचानां महा
त्मनाम् । ताम्रराजतलौहानाम्प्रादुरासीन्महास्वनः ॥ ७ ॥ छन्न-
मायोधनं सर्वं शरीरैर्गतचेतसाम् । गजाश्वसादिनां तत्र शित-
बाणात्तजीवितैः ॥ ८ ॥ रथोपस्थाभिपतितैरास्थिता मानवैर्मही ।
प्रनृत्यतीव संग्रामे चापहस्तो धनञ्जयः ॥ ९ ॥ श्रुत्वा गाण्डीव-
निर्घोषं विस्फूर्जितमिवाशनेः । त्रस्तानि सर्वसैन्यानि व्यपागच्छन्
महाहवात् ॥ १० ॥ कुण्डलोष्णीषधारीणि जातरूपस्रजस्तथा ।
पतितानि स्म दृश्यन्ते शिरांसि रणमूर्द्धनि ॥ ११ ॥ विशिखोन्मथितै-
र्गात्रैर्बाहुभिश्च सकार्मुकैः । सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति
मेदिनी ॥ १२ ॥ शिरसां पात्यमानानामन्तरा निशितैः शरैः ।
अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ ॥ १३ ॥ दर्शयित्वा तथात्मानं
रौद्रं रुद्रपराक्रम । अवरुद्धोऽचरत् पार्थो वर्षाणि त्रिदशानि
च ॥ १४ ॥ क्रोधाग्निमुत्सृजन् घोरो धार्त्तराष्ट्रेषु पाण्डवः ।
तस्य तद्दहतः सैन्यं दृष्ट्वा घोरं पराक्रमम् ॥ १५ ॥ सर्वे शान्ति-
परा भूत्वा धार्त्तराष्ट्रस्य पश्यतः । वित्रासयित्वा तत् सैन्यं द्रावयित्वा
महारथान् ॥ १६ ॥ अर्जुनो जयतां श्रेष्ठः पर्य्यवर्त्तत
भारत । प्रावर्त्तयन्नदीं घोरां शोणितौघां तरङ्गिणीम् ॥ १७ ॥
अस्थिशैवालसम्बाधां युगान्ते कालनिर्मिताम् । शरचापप्लवां घोरां
केशशैवलशाद्वलाम् ॥ १८ ॥ तनुत्रोष्णीषसम्बाधां नागकूर्मां महा-
द्विपाम् । मेदोवसासृक्प्रवहां महाभयविवर्द्धिनीम् ॥ १९ ॥ रौद्र-
रूपां महाभीमां श्वापदैरभिनादिताम् । तीक्ष्णशस्त्रमहाग्राहां

क्रव्यादगणसेविताम् ॥ २० ॥ मुक्ताहारोर्मिकलिलां चित्रालङ्कार-वुद्बुदाम् । शरसङ्घमहावर्त्तां नागनक्रान्दुरत्ययाम् ॥ २१ ॥ महा-रथमहाद्वीपां शङ्खदुन्दुभिनिस्वनाम् । चकार च तदा पार्थो नदीं दुस्तरशोणिताम् ॥ २२ ॥ आददानस्य हि शरान् सन्धाय च विमुञ्चतः । विकर्षतश्च गाण्डीवं न किञ्चिद्ददृशे जनः ॥ २३ ॥

इति विराटपर्वणि गोहरणपर्वणि अर्जुनसङ्कुलयुद्धे

द्विषष्टोऽध्यायः ॥ ६२ ॥

---

वैशम्पायन उवाच । ततो दुर्य्योधनः कर्णो दुःशासनविविंशती । द्रोणश्च सह पुत्रेण कृपश्चापि महारथः ॥ १ ॥ पुनर्यथुश्च संरब्धा धनञ्जयजिघांसव । विस्फारयन्तश्चापानि बलवन्ति दृढानि च ॥ २ ॥ तान् विकीर्णपताकेन रथेनादित्यवर्च्चसा । प्रत्युद्ययौ महाराज समन्ताद्वानरध्वजः ॥ ३ ॥ ततः कृपश्च कर्णश्च द्रोणश्च रथिनां वरः । तं महास्त्रैर्महावीर्य्यैः परिवार्य्य धनञ्जयम् ॥ ४ ॥ शरौघान् सम्यगस्यन्तो जीमूता इव वार्षिकाः । ववर्षुः शर-वर्षाणि पातयन्तो धनञ्जयम् ॥ ५ ॥ इषुभिर्बहुभिस्तूर्णं समरे लोमवाहिभिः । अदूरात् पर्य्यवस्थाय पूरयामासुरादृताः ॥ ६ ॥ तथा तैरवकीर्णस्य दिव्यैरस्त्रैः समन्ततः । न तस्य द्व्यङ्गुलमपि विवृतं सम्प्रदृश्यते ॥ ७ ॥ ततः प्रहस्य बीभत्सुर्दिव्यमैन्द्रं महा-रथः । अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत् ॥ ८ ॥ शर-रश्मिरिवादित्यः प्रतस्थे समरे बली । किरीटमाली कौन्तेयः सर्वान् प्रच्छादयन् कुरून् ॥ ९ ॥ यथा बलाहके विद्युत्पावको वा शिलोच्चये । तथा गाण्डीवमभवदिन्द्रायुधमिवाततम् ॥ १० ॥ यथा वर्षति पर्ज्जन्ये विद्युद्विभ्राजते दिवि । द्योतयन्ती दिशः सर्वाः पृथिवीञ्च समन्ततः ॥ ११ ॥ तथा दश दिशः सर्वाः पत-

ह्वाण्डीवमावृणोत। नागाश्वरथिनः सर्वे मुमुहुस्तत्र भारत॥ १२॥
सर्वे शान्तिपरा योधाः स्वचित्तानि न लेभिरे। संग्रामे विमुखाः
सर्वे योधास्ते हतचेतसः॥ १३॥ एवं सर्वाणि सैन्यानि भग्नानि
भरतर्षभ। व्यद्रवन्त दिशः सर्वा निराशानि स्वजीविते॥ १४॥

इति विराटपर्वणि गोहरणपर्वणि अर्जुनसङ्कुलयुद्धे
त्रिषष्टोऽध्यायः॥ ६३॥

---

वैशम्पायन उवाच। ततः शान्तनवो भीष्मो भरतानां पिता-
महः। वध्यमानेषु योधेषु धनञ्जयमुपाद्रवत्॥ १॥ प्रगृह्य
कार्मुकश्रेष्ठं जातरूपपरिष्कृतम्। शरानादाय तीक्ष्णाग्रान्मर्म-
भेदान् प्रमाथिनः॥ २॥ पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि।
शुशुभे स नरव्याघ्रो गिरिः सूर्य्योदये यथा॥ ३॥ प्रध्माय शङ्खं
गाङ्गेयो धार्त्तराष्ट्रान् प्रहर्षयन्। प्रदक्षिणमुपावृत्य बीभत्सुं सम-
वारयत्॥ ४॥ तमुदीक्ष्य समायान्तं कौन्तेयः परवीरहा। प्रत्य-
गृह्णात् प्रहृष्टात्मा धाराधरमिवाचलः॥ ५॥ ततो भीष्मः शरा-
नष्टौ ध्वजे पार्थस्य वीर्य्यवान्। समर्पयन्महावेगान् श्वसमाना-
निवोरगान्॥ ६॥ ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः।
ज्वलन्तं कपिमाजघ्नुर्ध्वजाग्रनिलयांश्च तान्॥ ७॥ ततो भल्लेन
महता पृथुधारेण पाण्डवः। छत्रं चिच्छेद भीष्मस्य तूर्णं तद-
पतद्भुवि॥ ८॥ ध्वजं चैवास्य कौन्तेयः शरैरभ्यहनद्भृशम्।
शीघ्रकृद्रथवाहांश्च तथोभौ पार्ष्णिसारथी॥ ९॥ अमृष्यमाण-
स्तद्भीष्मो जानन्नपि स पाण्डवम्। दिव्येनास्त्रेण महता धन-
ञ्जयमवाकिरत्॥ १०॥ तथैव पाण्डवो भीष्मे दिव्यमस्त्रमुदी-
रयन्। प्रत्यगृह्णाद‍मेयात्मा महामेघमिवाचलः॥ ११॥ तयो-
स्तदभवद्युद्धं तुमुलं लोमहर्षणम्। भीष्मस्य सह पार्थेन बलि-

वासवयोरिव ॥ १२ ॥ प्रेक्षन्ते कुरवः सर्वे योधाश्च सहसैनिकाः।
भल्लैर्भल्ला समागम्य भीष्मपाण्डवयोर्युधि ॥ १३ ॥ अन्तरीक्षे व्यरा-
जन्त खद्योता प्रावृषीव हि। अग्निचक्रमिवाविद्धं सव्यदक्षिण-
मस्यतः ॥ १४ ॥ गाण्डीवमभवद्राजन् पार्थस्य सृजतः शरान्।
ततः संछादयामास भीष्मं शरशतैः शितैः ॥ १५ ॥ पर्वतं वारि-
धाराभिश्छादयन्निव तोयदः। तां स वेलामिवोद्भूतां शरवृष्टिं
समुत्थिताम् ॥ १६ ॥ व्यधमत्सायकैर्भीष्मः पाण्डवं समवारयत्।
ततस्तानि निकृत्तानि शरजालानि भागशः ॥ १७ ॥ समरे च
व्यशीर्य्यन्त फाल्गुनस्य रथं प्रति। ततः कनकपुङ्खानां शरवृष्टिं
समुत्थिताम् ॥ १८ ॥ पाण्डवस्य रथात्तूर्णं शलभानामिवायतिम्।
व्यधमत्तां पुनस्तस्य भीष्मः शरशतैः शितैः ॥ १९ ॥ ततस्ते कुरवः
सर्वे साधुसाध्विति चाब्रुवन्। दुष्करं कृतवान् भीष्मो यदर्जुन-
मयोधयत् ॥ २० ॥ बलवांस्तरुणो दक्षः क्षिप्रकारी धनञ्जयः।
कोऽन्यः समर्थः पार्थस्य वेगन्धारयितुं रणे ॥ २१ ॥ ऋते शान्त-
नवात् भीष्मात् कृष्णाद्वा देवकीसुतात्। आचार्य्यप्रवराद्वापि भार-
द्वाजान्महाबलात् ॥ २२ ॥ अस्त्रैरस्त्राणि संवार्य्य क्रीड़न्तौ भरत-
र्षभौ। चक्षूंषि सर्वभूतानां मोहयन्तौ महाबलौ ॥ २३ ॥ प्राजा-
पत्यं तथैवैन्द्रमाग्नेयं रौद्रदारुणम्। कौवेरं वारुणञ्चैव याम्यं
वायव्यमेव च ॥ २४ ॥ प्रयुञ्जानौ महात्मानौ समरे तौ विचे-
रतुः। विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा ॥ २५ ॥ साधु
पार्थ महाबाहो साधु भीष्मेति चाब्रुवन्। नायं युक्तो मनुष्येषु
योऽयं संदृश्यते महान्। महास्त्राणां सम्प्रयोगः समरे भीष्म-
पार्थयोः ॥ २६ ॥

वैशम्पायन उवाच। एवं सर्वास्त्रविदुषोरस्त्रयुद्धमवर्त्तत।
अस्त्रयुद्धे तु निवृत्ते शरयुद्धमवर्त्तत ॥ २७ ॥ अथ जिष्णुरुपावृत्य
क्षुरधारेण कार्म्मुकम्। चकर्त्त भीष्मस्य तदा जातरूपपरिष्कृतम्

॥ २८ ॥ निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे। समादाय महाबाहुः सज्यं चक्रे महारथः ॥ २९ ॥ शरांश्च सुबहून् क्रुद्धो मुमोचाशु धनञ्जये। अर्जुनोऽपि शरांस्तीक्ष्णान् भीष्माय निशितान् बहून् ॥ ३० ॥ चिक्षेप सुमहातेजास्तथा भीष्मश्च पाण्डवे। तयोर्दिव्यास्त्रविदुषोरस्यतोर्निशिताङ्कुरान् ॥ ३१ ॥ न विशेषस्तदा राजन् लक्ष्यते स्म महात्मनोः। अथावृणोद्दशदिशः शरैरतिरथस्तदा ॥ ३२ ॥ किरीटमाली कौन्तेयः शूरः शान्तनवस्तथा। अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम् ॥ ३३ ॥ बभूव तस्मिन् संग्रामे राजन् लोके तदद्भुतम्। पाण्डवेन हताः शूरा भीष्मस्य रथरक्षिणः ॥ ३४ ॥ शेरते स्म तदा राजन् कौन्तेयस्याभितो रथम्। ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः ॥ ३५ ॥ अगच्छन् पुङ्खसंश्लिष्टाः श्वेतवाहनपत्रिणः। निष्पतन्तो रथात्तस्य धौता हैरण्यवाससः ॥ ३६ ॥ आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः। तस्य तद्दिव्यमस्त्रं हि विगाढं चित्रमस्यतः ॥ ३७ ॥ प्रैक्षन्त स्मान्तरीक्षस्थाः सर्वे देवाः सवासवाः। तं दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ॥ ३८ ॥ शशंस देवराजाय चित्रसेनः प्रतापवान्। पश्येमान् पार्थनिर्मुक्तान् संसक्तानिव गच्छतः ॥ ३९ ॥ चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यतः। नेदं मनुष्याः सद्दध्युर्नह्येदं तेषु विद्यते ॥ ४० ॥ पौराणानां महास्त्राणां विचित्रोऽयं समागमः। आददानस्य हि शरान् सन्धाय च विमुञ्चतः ॥ ४१ ॥ विकर्षतश्च गाण्डीवं नान्तरं समदृश्यत। मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ॥ ४२ ॥ न शक्नुवन्ति सैन्यानि पाण्डवं प्रतिवीक्षितुम्। तथैव भीष्मं गाङ्गेयं द्रष्टुं नोत्सहते जनः ॥ ४३ ॥ उभौ विश्रुतकर्माणावुभौ तीव्रपराक्रमौ। उभौ सदृशकर्माणावुभौ युधि सुदुर्जयौ ॥ ४४ ॥ इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम्। पूजयामास दिव्येन पुष्पवर्षेण भारत ॥ ४५ ॥

ततः शान्तनवो भीष्मो वामं पार्श्वमताड़यत । पश्यतः प्रतिसन्धाय विध्यतः सव्यसाचिनः ॥ ४६ ॥ ततः प्रहस्य वीभत्सुः पृथुधारेण कार्मुकम । चिच्छेद गार्द्धपत्रेण भीष्मस्यादित्यतेजसः ॥ ४७ ॥ अथैनं दशभिर्वाणैः प्रत्यविध्यत् स्तनान्तरे । यतमानं पराक्रान्तं कुन्तीपुत्रो धनञ्जयः ॥ ४८ ॥ स पीड़ितो महाबाहुर्गृहीत्वा रथ-कूवरम् । गाङ्गेयो युद्धदुर्द्धर्षस्तस्थौ दीर्घमिवान्तरम् ॥ ४९ ॥ तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् । उपदेशमनुस्मृत्य रक्ष-माणो महारथम् ॥ ५० ॥

इति विराटपर्वणि गोहरणपर्वणि भीष्मापयाने चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

वैशम्पायन उवाच । भीष्मे तु सङ्ग्रामशिरो विहाय पलाय-माने धृतराष्ट्रपुत्रः । उत्सृज्य केतुं विनदन्महात्मा धनुर्विगृह्या-र्ज्जुनमाससाद ॥ १ ॥ स भीमधन्वानमुदग्रवीर्य्यं धनञ्जयं शत्रु-गणे चरन्तम् । आकर्णपूर्णायतचोदितेन विव्याध भल्लेन ललाट-मध्ये ॥ २ ॥ स तेन वाणेन समर्पितेन जाम्बूनदाग्रेण सुसंहितेन । रराज राजन् महनीयकर्मा यथैकपर्वा रुचिरैकशृङ्गः ॥ ३ ॥ अथास्य वाणेन विदारितस्य प्रादुर्बभूवासृगजस्रमुष्णम् । स तस्य जाम्बूनदपुङ्खचित्रो भित्वा ललाटं सुविराजते स्म ॥ ४ ॥ स तेन वाणाभिहतस्तरस्वी दुर्य्योधनेनोद्धतमन्युवेगः । शरानुपादाय विषाग्निकल्पान् विव्याध राजानमदीनसत्त्व ॥ ५ ॥ दुर्य्योधन-श्चापि तमुग्रतेजाः पार्थश्च दुर्य्योधनमेकवीरः । अन्योऽन्यमाजौ पुरुषप्रवीरौ समौ समाजघ्नतुराजमीढौ ॥ ६ ॥ ततः प्रभिन्ने महागजेन महीधराभेन पुनर्विकर्णः । रथैश्चतुर्भिर्गजपादरक्षैः कुन्तीसुतं जिष्णुमथाभ्यधावत् ॥ ७ ॥ तमापतन्तं त्वरितं गजेन्द्र-

धनञ्जयः कुम्भविभागमध्ये । आकर्णपूर्णेन महायसेन बाणेन
विव्याध महाजवेन ॥ ८ ॥ पार्थेन सृष्टः स तु गार्द्धपत्रः आपुङ्ख-
देशात् प्रविवेश नागम् । विदार्य्य शैलप्रवरप्रकाशं यथाशनिः
पर्व्वतमिन्द्रसृष्टः ॥ ९ ॥ शरप्रतप्तः स तु नागराजः प्रवेपिताङ्गो
व्यथितान्तरात्मा । संसीदमानो निपपात मह्यां वज्राहतं शृङ्ग-
मिवाचलस्य ॥ १० ॥ निपातिते दन्तिवरे पृथिव्यां त्रासाद्विकर्णः
सहसावतीर्य्य । तूर्णं पदान्यष्टशतानि गत्वा विविंशतेः स्यन्दन-
मारुरोह ॥ ११ ॥ निहत्य नागन्तु शरेण तेन वज्रोपमेनाद्रिवरा-
म्बुदाभम् । तथाविधेनैव शरेण पार्थो दुर्य्योधनं वक्षसि निर्वि-
भेद ॥ १२ ॥ ततो गजे राजनि चैव भग्ने तथा विकर्णे च
सपादरक्षे । गाण्डीवमुक्तैर्विशिखैः प्रणुन्नास्ते योधमुख्याः सहसा-
पजग्मुः ॥ १३ ॥ दृष्ट्वैव पार्थेन हतञ्च नागं योधांश्च सर्व्वान् द्रवतो
निशम्य । रथं समावृत्य कुरुप्रवीरो रणात् प्रदुद्राव यतो न पार्थः
॥ १४ ॥ तं भीमरूपं त्वरितं द्रवन्तं दुर्य्योधनं शत्रुसहोऽभिषङ्गात् ।
प्रास्फोटयद्योद्धुमना किरीटी बाणेन विद्धं रुधिरं वमन्तम् ॥१५॥

अर्जुन उवाच । विहाय कीर्त्तिं विपुलां यशश्च युद्धात् परा-
वृत्य पलायसे किम् । न तेऽद्य तूर्य्याणि समाहतानि तथैव
राज्यादवरोपितस्य ॥ १६ ॥ युधिष्ठिरस्यास्मि निदेशकारी पार्थ-
स्तृतीयो युधि संस्थितोऽस्मि । तदर्थमावृत्य मुखं प्रयच्छ नरेन्द्र-
वृत्तं स्मर धार्त्तराष्ट्र ॥ १७ ॥ मोघं तवेदं भुवि नामधेयं दुर्य्यो-
धनेतीह कृतं पुरस्तात् । नहीह दुर्य्योधनता तवास्ति पलायमानस्य
रणं विहाय ॥ १८ ॥ न ते पुरस्तादथ पृष्ठतो वा पश्यामि
दुर्य्योधन रक्षितारम् । अपेहि युद्धात् पुरुषप्रवीर प्राणान् प्रियान्
पाण्डवतोऽद्य रक्ष ॥ १९ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि दुर्य्योधनपलायने
पञ्चषष्टोऽध्यायः ॥ ६५ ॥

वैशम्पायन उवाच। आहूयमानस्तु स तेन सङ्ख्ये महात्मना वै धृतराष्ट्रपुत्रः। निवर्त्तितस्तस्य गिराङ्कुशेन महागजो मत्त इवाङ्कुशेन ॥ १ ॥ सोऽमृष्यमाणो वचसाभिमृष्टो महारथेनातिरथस्तरस्वी। पर्य्याववर्त्ताथ रथेन वीरो भोगी यथा पादतलाभिमृष्टः ॥ २ ॥ तं प्रेक्ष्य कर्णः परिवर्त्तमानं निवर्त्त्य संस्तभ्य च विद्धगात्रम्। दुर्य्योधनस्योत्तरतोऽभ्यगच्छत् पार्थं नृवीरो युधि हेममाली ॥ ३ ॥ भीष्मस्ततः शान्तनवो विवृत्य हिरण्यकक्ष्यस्त्वरयाभिषङ्गी। दुर्य्योधनं पश्चिमतोऽभ्यरक्षत् पार्थान्महाबाहुरधिज्यधन्वा ॥ ४ ॥ द्रोणः कृपश्चैव विविंशतिश्च दुःशासनश्चैव विवृत्य शीघ्रम्। सर्व्वे पुरस्ताद्विततेषुचापा दुर्य्योधनार्थं त्वरिताभ्युपेयुः ॥ ५ ॥ स तान्यनीकानि निवर्त्तमानान्यालोक्य पूर्णौघनिभानि पार्थः। हंसो यथा मेघमिवापतन्तं धनञ्जयः प्रत्यपतत्तरस्वी ॥ ६ ॥ ते सर्व्वतः सम्परिवार्य्य पार्थं अस्त्राणि दिव्यानि समाददानाः। ववर्षुरभ्येत्य शरैः समन्तान्मेघा यथा भूधरमम्बुवर्षैः ॥ ७ ॥ ततोऽस्त्रमस्त्रेण निवार्य्य तेषां गाण्डीवधन्वा कुरुपुङ्गवानाम्। संमोहनं शत्रुसहोऽन्यदस्त्रं प्रादुश्चकारैन्द्रमवारणीयम् ॥ ८ ॥ ततो दिशश्चानुदिशो विवृत्य शरैः सुधारैर्न्निशितैः सुपुङ्खैः। गाण्डीवघोषेण मनांसि तेषां महाबलः प्रव्यथयाञ्चकार ॥ ९ ॥ ततः पुनर्भीमरवम्प्रगृह्य दोर्भ्यां महाशङ्खमुदारघोषम्। व्यनादयत् स प्रदिशो दिशः खं भुवञ्च पार्थो द्विषतां निहन्ता ॥ १० ॥ ते शङ्खनादेन कुरुप्रवीराः संमोहिताः पार्थसमीरितेन। उत्सृज्य चापानि दुरासदानि सर्व्वे तदा शान्तिपरा बभूवुः ॥ ११ ॥ तथा विसंज्ञेषु बलेषु पार्थः स्मृत्वा च वाक्यानि तथोत्तरायाः। निर्य्याहि मध्यादिति मत्स्यपुत्रमुवाच यावत् कुरवो विसंज्ञाः ॥ १२ ॥ आचार्य्यशारद्वतयोः सशुक्ले कर्णस्य पीतं रुचिरञ्च वस्त्रम्। द्रौणेश्च राज्ञश्च तथैव नीले वस्त्रे समादत्स्व नरप्रवीर ॥ १३ ॥ भीष्मस्य संज्ञान्तु तथैव मन्ये

जानाति सोऽस्त्रप्रतिघातमेषः। एतस्य वाहान् कुरु सव्यतस्त्वमेवं हि यातव्यमगूढसञ्ज्ञैः॥ १४॥ रश्मीन् समुत्सृज्य ततो महात्मा रथादवप्लुत्य विराटपुत्रः। वस्त्राण्युपादाय महारथानां तूर्णं पुनः स्वं रथमारुरोह॥ १५॥ ततोऽन्वशासच्चतुरः सदश्वान् पुत्रो विराटस्य हिरण्यकक्षान्। ते तद्व्यतीयुर्ध्वजिनामनीकं श्वेता वहन्तोऽर्जुनमाजिमध्यात्॥ १६॥ तथानुयान्तं पुरुप्रवीरं भीष्मः शरैरभ्यहनत्तरस्वी। स चापि भीष्मस्य हयान्निहत्य विव्याध पार्थो दशभिः पृषत्कैः॥ १७॥ ततोऽर्जुनो भीष्ममपास्य युद्धे विद्ध्वास्य यन्तारमरिष्टधन्वा। तस्थौ विमुक्तो रथवृन्दमध्याद्राहुं विदार्य्येव सहस्ररश्मिः॥ १८॥ लब्ध्वा तु सञ्ज्ञां स कुरुप्रवीरः पार्थं निरीक्ष्याथ सुरेन्द्रकल्पम्। रणाद्विमुक्तं स्थितमेकमाजौ तं धार्त्तराष्ट्रस्त्वरितं बभाषे॥ १९॥ अयं कथञ्चिद्भवता विमुक्तस्तथा प्रमथ्नीहि यथा न मुच्येत्। तमब्रवीत् शान्तनवः प्रहस्य क्व ते गता बुद्धिरभूत क्व वीर्य्यम्॥ २०॥ शान्तिं परां प्राप्य यदा स्थितोऽभूरुत्सृज्य वाणांश्च धनुर्विचित्रम्। न त्वेष बीभत्सुरलं नृशंसं कर्त्तुं न पापोऽस्य मनो निविष्टम्॥ २१॥ त्रैलोक्यहेतोर्न जहेत् स्वधर्मं सर्वे न तस्मान्निहता रणेऽस्मिन्। क्षिप्रं कुरून् याहि कुरुप्रवीर विजित्य गाश्च प्रतियातु पार्थः। मा ते स्वकोऽर्थो निपतेत मोहात्तत्सं विधातव्यमरिष्टवन्धम्॥ २२॥

वैशम्पायन उवाच। दुर्य्योधनस्तस्य तु तन्निशम्य पितामहस्यात्महितं वचोऽथ। अतीतकामो युधि सोऽत्यमर्षी राजा विनिश्वस्य बभूव तूष्णीम्॥ २३॥ तद्भीष्मवाक्यं हितमीक्ष्य सर्वे धनञ्जयाग्निञ्च विवर्द्धमानम्। निवर्त्तनायैव मनो निदध्युर्दुर्य्योधनं ते परिरक्षमाणाः॥ २४॥ तान् प्रस्थितान् प्रीतमनाः स पार्थो धनञ्जयः प्रेक्ष्य कुरुप्रवीरान्। आभाषमाणोऽनुनयं मुहूर्त्तं वचोऽब्रवीत् सम्परिहृत्य भूयः॥ २५॥ पितामहं शान्तनवञ्च वृद्धं

द्रोणं गुरुञ्च प्रणिपत्य मूर्द्ध्ना। द्रौणिं कृपञ्चैव कुरूंश्च मान्या-
ञ्छरैर्विचित्रैरभिवाद्य चैव ॥ २६ ॥ दुर्य्योधनस्योत्तमरत्नचित्रं
चिच्छेद पार्थो मुकुटं शरेण। आमन्त्र्य वीरांश्च तथैव मान्यान्
गाण्डीवघोषेण विनाद्य लोकान् ॥ २७ ॥ स देवदत्तं सहसा
विनाद्य विदार्य्य वीरो द्विषतां मनांसि। ध्वजेन सर्वानभिभूय
शत्रून् सहेमजालेन विराजमानः ॥ २८ ॥ दृष्ट्वा प्रयातांस्तु कुरून्
किरीटी हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रम्। आवर्त्तयाश्वान् पशवो
जितास्ते याताः परे याहि पुरं प्रहृष्ट ॥ २९ ॥ देवास्तु दृष्ट्वा
महदद्भुतं तद्युद्धं कुरूणां सह फाल्गुनेन। जग्मुर्यथा स्वं भवनं
प्रतीताः पार्थस्य कर्म्माणि विचिन्तयन्तः ॥ ३० ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनयुद्धनिवर्त्तने
षड्षष्टितमोऽध्यायः ॥ ६६ ॥

---

वैशम्पायन उवाच। ततो विजित्य संग्रामे कुरून् स वृषभे
क्षणः। समानयामास तदा विराटस्य धनं महत् ॥ १ ॥ गतेषु
च प्रभग्नेषु धार्त्तराष्ट्रेषु सर्वशः। वनान्निष्क्रम्य गहनाद्बहवः कुरु-
सैनिकाः ॥ २ ॥ भयात् सन्त्रस्तमनसः समाजग्मुस्ततस्ततः।
मुक्तकेशास्त्वदृश्यन्त स्थिताः प्राञ्जलयस्तदा ॥ ३ ॥ क्षुत्पिपासा-
परिश्रान्ता विदेशस्था विचेतसः। ऊचुः प्रणम्य सम्भ्रान्ताः पार्थं
किङ्करवाम ते ॥ ४ ॥

अर्ज्जुन उवाच। स्वस्ति व्रजत वो भद्रं न भेतव्यं कथञ्चन।
नाहमार्त्तान् जिघांसामि भृशमाश्वासयामि वः॥ ५ ॥

वैशम्पायन उवाच। तस्य तामभया वाचं श्रुत्वा योधाः समा-
गताः। आयुःकीर्त्तियशोदाभिस्तमाशीर्भिरनन्दयन् ॥ ६ ॥ ततो-
ऽर्ज्जुनं नागमिव प्रभिन्नमुत्सृज्य शत्रून् विनिवर्त्तमानम्। विराट-

राष्ट्राभिमुखं प्रयान्तं नाशक्नुवंस्तं कुरवोऽभियातुम् ॥ ७ ॥ ततः स तन्मेघमिवापतन्तं विद्राव्य पार्थः कुरुमेघसैन्यम्। मत्स्यस्य पुत्रं द्विषतां निहन्ता वचोऽब्रवीत् सपरिष्वज्य भूयः ॥ ८ ॥ पितुः सकाशे तव तात सर्वे वसन्ति पार्था विदितास्तवैव। तान्मा प्रशंसीर्नगरं प्रविश्य भीतः प्रणश्येद्धि स मत्स्यराजः ॥ ९ ॥ मया जिता सा ध्वजिनी कुरूणां मया च गावो विजिता द्विषद्भ्यः। पितुः सकाशं नगरं प्रविश्य त्वमात्मनः कर्म कृतं ब्रवीहि ॥ १० ॥

उत्तर उवाच। यत्ते कृतं कर्म न पारणीयं तत्कर्म कर्त्तुं मम नास्ति शक्तिः। न त्वां प्रवक्ष्यामि पितुः सकाशे यावन्न मां वक्ष्यसि सव्यसाचिन् ॥ ११ ॥

वैशम्पायन उवाच। स शत्रुसेनामवजित्य जिष्णुराच्छिद्य सर्वञ्च धनं कुरुभ्यः। श्मशानमागत्य पुनः शमीं तामभ्येत्य तस्थौ शरविक्षताङ्गः ॥ १२ ॥ ततः स वह्निप्रतिमो महाकपिः सहैव भूतैर्दिवमुत्पपात। तथैव माया विहिता बभूव ध्वजञ्च सैंहं युयुजे रथे पुनः ॥ १३ ॥ विधाय तत्रायुधमाजिवर्द्धनं कुरूत्तमानामिषुधीः शरांस्तथा। प्रायात्स मत्स्यो नगरं प्रहृष्टः किरीटिना सारथिना महात्मना ॥ १४ ॥ पार्थस्तु कृत्वा परमार्य्यकर्म निहत्य शत्रून् द्विषतां निहन्ता। चकार वेणीञ्च तथैव भूयो जग्राह रश्मीन् पुनरुत्तरस्य। विवेश हृष्टो नगरं महात्मा बृहन्नलारूपमुपेत्य सारथिः ॥ १५ ॥

वैशम्पायन उवाच। ततो निवृत्ताः कुरवः प्रभग्ना वशमास्थिताः। हस्तिनापुरमुद्दिश्य सर्वे दीना ययुस्तदा ॥ १६ ॥ पन्थानमुपसङ्गम्य फाल्गुनो वाक्यमब्रवीत्। राजपुत्र प्रत्यवेक्ष समानीतानि सर्वशः ॥ १७ ॥ गोकुलानि महाबाहो वीर गोपालकैः सह। ततोऽपराह्णे यास्यामो विराटनगरं प्रति ॥ १८ ॥ आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः। गच्छन्तु त्वरिता-

इमे गोपालाः प्रेषितास्त्वया। नगरे प्रियमाख्यातुम् घोषयन्तु च ते जयम् ॥ १९ ॥

वैशम्पायन उवाच। अथोत्तरस्त्वरमाणः स दूतानाज्ञापयद्वचनात् फाल्गुनस्य। आचक्षध्वं विजयं पार्थिवस्य भग्नाः परे विजिताश्चापि गावः ॥ २० ॥ इत्येवं तौ भारतमत्स्यवीरौ संमन्त्र्य सङ्गम्य ततः शमीं ताम्। अभ्येत्य भूयो विजयेन तृप्तावुत्सृष्टमारोपयतां स्म भाण्डम् ॥ २१ ॥ स शत्रुसेनामभिभूय सर्वामाच्छिद्य सर्वञ्च धनं कुरुभ्यः। वैराटिरायान्नगरं प्रतीतो बृहन्नलासारथिना प्रवीरः ॥ २२ ॥

इति विराटपर्वणि गोहरणपर्वणि उत्तरागमने
सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

वैशम्पायन उवाच। धनं चापि विजित्याशु विराटो वाहिनीपतिः। विवेश नगरं हृष्टश्चतुर्भिः पाण्डवैः सह ॥ १ ॥ जित्वा त्रिगर्त्तान् संग्रामे गाश्चैवादाय सर्वशः। अशोभत महाराज सह पार्थैः श्रिया वृतः ॥ २ ॥ तमासनगतं वीरं सुहृदां हर्षवर्द्धनम्। उपासाञ्चक्रिरे सर्वे सह पार्थैः परन्तपाः ॥ ३ ॥ उपतस्थुः प्रकृतयः समस्ताः ब्राह्मणैः सह। सभाजितः ससैन्यस्तु प्रतिनन्द्याथ मत्स्यराट् ॥ ४ ॥ विसर्ज्जयामास तदा द्विजांश्च प्रकृतीस्तथा। तथा स राजा मत्स्यानां विराटो वाहिनीपतिः ॥ ५ ॥ उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत्। आचख्युस्तस्य तत्सर्वा स्त्रियः कन्याश्च वेश्मनि ॥ ६ ॥ अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम्। विजेतुमभिसंरब्ध एक एवातिसाहसात् ॥ ७ ॥ बृहन्नलासहायश्च निर्गतः पृथिवीञ्जय। उपायातानतिरथान् भीष्मं शान्तनवं कृपम्। कर्णं दुर्य्योधनं द्रोणं द्रोणपुत्रञ्च षड्रथान् ॥ ८ ॥

वैशम्पायन उवाच । राजा विराटोऽथ भृशाभितप्तः श्रुत्वा सुतं ह्येकरथेन यातम् । बृहन्नलासारथिमाजिवर्द्धनं प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥ ९ ॥ सर्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः । त्रिगर्त्तान्निर्जितान् श्रुत्वा न स्थास्यन्ति कदाचन ॥ १० ॥ तस्माद्गच्छन्तु मे योधा बलेन महता वृताः । उत्तरस्य परीप्सार्थं ये त्रिगर्त्तैरविक्षताः ॥ ११ ॥ हयांश्च नागांश्च रथांश्च शीघ्रं पदातिसङ्घांश्च ततः प्रवीरान् । प्रस्थापयामास सुतस्य हेतोर्विचित्रवस्त्राभरणोपपन्नान् ॥ १२ ॥ एवं स राजा मत्स्यानां विराटो वाहिनीपतिः । व्यादिदेशाथ तां क्षिप्रं वाहिनीं चतुरङ्गिणीम् ॥ १३ ॥ कुमारमाशु जानीत यदि जीवति वा नवा । यस्य यन्ता गतः षण्ढो मन्येऽहं स न जीवति ॥ १४ ॥

वैशम्पायन उवाच । तमब्रवीद्धर्मराजो विहस्य विराटराजं तु भृशाभितप्तम् । बृहन्नलासारथिश्चेन्नरेन्द्र परे न नेष्यन्ति तवाद्य गास्ताः ॥ १५ ॥ सर्वान् महीपान् सहितान् कुरूंश्च तथैव देवासुरसिद्धयक्षान् । अलं विजेतुं समरे सुतस्ते सुरक्षितः सारथिना हि तेन ॥ १६ ॥

वैशम्पायन उवाच । अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः । विराटनगरं प्राप्य विजयं समवेदयन् ॥ १७ ॥ राज्ञस्तत्सर्वमाचख्यौ मन्त्री विजयमुत्तमम् । पराजयं कुरूणाञ्चाप्युपायान्तं तथोत्तरम् ॥ १८ ॥ सर्वा विनिर्ज्जिता गाव कुरवश्च पराजिताः । उत्तरः सह सूतेन कुशली च परन्तप ॥ १९ ॥

युधिष्ठिर उवाच । दिष्ट्या विनिर्ज्जिता गावः कुरवश्च पलायिता । नाद्भुतं त्वेव मन्येऽहं यत्ते पुत्रोऽजयत् कुरून् । ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ॥ २० ॥

वैशम्पायन उवाच । ततो विराटो नृपतिः सम्प्रहृष्टतनूरुहः । श्रुत्वा स विजयं तस्य कुमारस्यामितौजसः ॥ २१ ॥ आच्छा-

हर्षिता दूतांस्तान् मन्त्रिणः सोऽभ्यचोदयत्। राजमार्गाः क्रियन्तां
मे पताकाभिरलङ्कृताः ॥ २२ ॥ पुष्पोपहारैरर्च्यन्तां देवताश्चापि
सर्व्वशः। कुमारा योधमुख्याश्च गणिकाश्च स्वलङ्कृताः ॥ २३ ॥
वादित्राणि च सर्व्वाणि प्रत्युद्यान्तु सुतं मम। घण्टावान्मानवः
शीघ्रं मत्तमारुह्य वारणम् ॥ २४ ॥ शृङ्गाटकेषु सर्व्वेषु समाख्यातु
जयं मम। उत्तरा च कुमारीभिर्बह्वीभिः परिवारिता। शृङ्गार-
वेशाभरणा प्रत्युद्यातु सुतं मम ॥ २५ ॥

वैशम्पायन उवाच। श्रुत्वा चेदं वचनं पार्थिवस्य सर्व्वं पर्व्वं
स्वस्तिकपाणि भूतम्। भेर्य्यश्च तूर्य्याणि च वारिजाश्च वेशैः परार्द्ध्यैः
प्रमदाः शुभाश्च ॥ २६ ॥ तथैव सूतैः सह मागधैश्च नान्दीरवाद्याः
पणवास्तूर्य्यवाद्याः। पुराद्विराटस्य महाबलस्य प्रत्युद्ययुः पुत्र-
मनन्तवीर्य्यम् ॥ २७ ॥

वैशम्पायन उवाच। प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वल-
ङ्कृताः। मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत् ॥ २८ ॥ अक्षा-
नाहर सैरिन्ध्रि कङ्क द्यूतं प्रवर्त्तताम्। तं तथा वादिनं दृष्ट्वा
पाण्डवः प्रत्यभाषत ॥ २९ ॥ न देवितव्यं हृष्टेन कितवेनेति नः
श्रुतम्। तं त्वामद्य मुदायुक्तं नाहं देवितुमुत्सहे। प्रियं तु ते
चिकीर्षामि वर्त्ततां यदि मन्यसे ॥ ३० ॥

विराट उवाच। स्त्रियो गावो हिरण्यञ्च यच्चान्यद्वसु किञ्चन।
न मे किञ्चित्त्वया रक्ष्यमन्तरेणापि देवितुम् ॥ ३१

कङ्क उवाच। किन्ते द्यूतेन राजेन्द्र बहुदोषेण मानद।
देवने बहवो दोषास्तस्मात्तत् परिवर्ज्जयेत् ॥ ३२ ॥ श्रुतस्ते यदि
वा दृष्टः पाण्डवेयो युधिष्ठिरः। स राष्ट्रं सुमहत् स्फीतं भ्रातॄंश्च
त्रिदशोपमान् ॥ ३३ ॥ राज्यं हारितवान् सर्व्वं तस्माद्द्यूतं न
रोचये। अथ वा मन्यसे राजन् दीव्याम यदि रोचते ॥ ३४ ॥

वैशम्पायन उवाच। प्रवर्त्तमाने द्यूते तु मत्स्यः पाण्डवमब्र-

वीत्। यस्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ॥ ३५ ॥ ततोऽब्रवीन्महात्मा स एनं राजा युधिष्ठिरः। बृहन्नला यस्य यन्ता कथं स न जयेत् युधि ॥ ३६ ॥ इत्युक्तः कुपितो राजा मत्स्यः पाण्डवमब्रवीत् । समं पुत्रेण मे षण्डं ब्रह्मबन्धो प्रशंससि ॥ ३७ ॥ वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे। भीष्मद्रोणमुखान् सर्वान् कस्मान्न स विजेष्यति ॥ ३८ ॥ वयस्यत्वात्तु ते ब्रह्मन्नपराधमिमं क्षमे। नेदृशं तु पुनर्वाच्यं यदि जीवितुमिच्छसि ॥ ३९ ॥

युधिष्ठिर उवाच। यत्र द्रोणस्तथा भीष्मो द्रौणिर्वैकर्त्तनः कृपः। दुर्योधनश्च राजेन्द्रस्तथान्ये च महारथाः ॥ ४० ॥ मरुद्गणैः परिवृतः साक्षादपि मरुत्पतिः। कोऽन्यो बृहन्नलायास्तान् प्रतियुध्येत सङ्गतान् ॥ ४१ ॥ यस्य बाहुबले तुल्यो न भूतो न भविष्यति। अतीव समरं दृष्ट्वा हर्षो यस्योपजायते ॥ ४२ ॥ यो जयेत् सहितान् सर्वान् ससुरासुरमानवान्। तादृशेन सहायेन कस्मात् स न विजेष्यते ॥ ४३ ॥

विराट उवाच। बहुशः प्रतिषिद्धोऽसि न च वाचं नियच्छसि। नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ॥ ४४ ॥

वैशम्पायन उवाच। ततः प्रकुपितो राजा तमक्षेणाहनद्भृशम्। मुखे युधिष्ठिरं कोपान्नैवमित्येव भर्त्सयन् ॥ ४५ ॥ बलवत् प्रतिविद्धस्य नस्तः शोणितमावहत्। तदप्राप्तं महीं पार्थः पाणिभ्यां प्रत्यगृह्णत ॥ ४६ ॥ अवैक्षत स धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम्। सा ज्ञात्वा तमभिप्रायं भर्त्तुश्चित्तवशानुगा ॥ ४७ ॥ पात्रं गृहीत्वा सौवर्णं जलपूर्णमनिन्दिता। तच्छोणितं प्रत्यगृह्णाद्यत् प्रसुस्राव वस्ततः ॥ ४८ ॥ अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा। अवकीर्य्यमाणः संहृष्टो नगरं स्वैरमागतः ॥ ४९ ॥ सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैस्तथा। आसाद्य भवनद्वारं

पिवे संप्रत्यवेदयत् ॥ ५० ॥ ततो द्वाःस्थः प्रविश्यैव विराटमिद-मब्रवीत् । बृहन्नलासहायस्ते पुत्रो द्वार्य्युत्तरः स्थितः ॥ ५१ ॥ ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत् । प्रवेश्यतामुभौ तूर्णं दर्शनेप्सुरहं तयोः ॥ ५२ ॥ क्षत्तारं कुरुराजस्तु शनैः कर्णे उपाजपत् । उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नला ॥ ५३ ॥ एतस्य हि महावाहो व्रतमेतत् समाहितम् । यो ममाङ्गे व्रणं कुर्य्याच्छोणितं वापि दर्शयेत् ॥ ५४ ॥ अन्यत्र संग्रामगतान्न स जीवेत् कथञ्चन । न मृष्याद्भृशसङ्क्रुद्धो मां दृष्ट्वा तु सशोणितम् । विराटमिह सामात्यं हन्यात् सबल-वाहनम् ॥ ५५ ॥

वैशम्पायन उवाच । ततो राज्ञः सुतो ज्येष्ठः प्राविशत् पृथिवीञ्जयः । सोऽभिवाद्य पितुः पादौ कङ्कञ्चाप्युपतिष्ठत ॥५६॥ ततो रुधिरसंयुक्तमनेकाग्रमनागसम् । भूमावासीनमेकान्ते सै-रिन्ध्रया प्रत्युपस्थितम् ॥ ५७ ॥ ततः पप्रच्छ पितरं त्वरमाण इवोत्तरः । केनायं ताडितो राजन् केन पापमिदं कृतम् ॥५८॥

विराट उवाच । मयायं ताडितो जिह्मो न चाप्येतावदर्हति । प्रशस्यमाने यत् शूरे त्वयि षण्ढं प्रशंसति ॥ ५९ ॥

उत्तर उवाच । अकार्य्यं ते कृतं राजन् क्षिप्रमेव प्रसाद्यताम् । मा त्वां ब्रह्मविषं घोरं समूलमिह निर्द्दहेत् ॥ ६० ॥

वैशम्पायन उवाच । स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्र-वर्द्धनः । क्षमयामास कौन्तेयं भस्मच्छन्नमिवानलम् ॥ ६१ ॥ क्षमयन्तन्तु राजानं पाण्डवः प्रत्यभाषत । चिरं क्षान्तमिदं राजन्न मन्युर्विद्यते मम ॥ ६२ ॥ यदि ह्येतत् पतेद्भूमौ रुधिरं मम नस्ततः । सराष्ट्रस्त्वं महाराज विनश्येथा न संशयः ॥ ६३ ॥ न दूषयामि ते राजन् यद्वै हन्याददूषकम् । बलवन्तं प्रभुं राजन् क्षिप्रं दारुणमाप्नुयात् ॥ ६४ ॥

वैशम्पायन उवाच। शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नला। अभिवाद्य विराटन्तु कङ्कं चाप्युपतिष्ठत ॥ ६५ ॥ क्षामयित्वा तु कौरव्यं रणादुत्तरमागतम्। प्रशशंस ततो मत्स्यः शृण्वतः सव्यसाचिनः ॥ ६६ ॥ त्वया दायादवानस्मि कैकेयीनन्दिवर्द्धन। त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ॥ ६७ ॥ पदं पदसहस्रेण यश्चरन्नापराध्नुयात्। तेन कर्णेन ते तात कथमासीत्समागमः ॥ ६८ ॥ मनुष्यलोके सकले यस्य तुल्यो न विद्यते। तेन भीष्मेण ते तात कथमासीत्समागमः ॥ ६९ ॥ आचार्यो वृष्णिवीराणां कौरवाणाञ्च यो द्विजः। सर्वक्षत्रस्य चाचार्यः सर्वशस्त्रभृतांवरः ॥ ७० ॥ तेन द्रोणेन ते तात कथमासीत्समागमः। आचार्यपुत्रो यः शूरः सर्वशस्त्रभृतामपि ॥ ७१ ॥ अश्वत्थामेति विख्यातस्तेनासीत् सङ्गरः कथम्। रणे यं प्रेक्ष्य सीदन्ति हृतस्वा वणिजो यथा ॥ ७२ ॥ कृपेण तेन ते तात कथमासीत् समागमः। पर्वतं योऽभिविध्येत राजपुत्रो महेषुभिः ॥ ७३ ॥ दुर्य्योधनेन ते तात कथमासीत् समागमः। अवगाढा द्विषन्तो मे सुखो वातोऽभिवाति माम् ॥ ७४ ॥ यस्त्वं धनमथाजैषीः कुरुभिर्ग्रस्तमाहवे। तेषां भयाभिपन्नानां सर्वेषां बलशालिनाम् ॥ ७५ ॥ नूनं प्रकाल्य तान् सर्वांस्त्वया युधि नरर्षभ। आच्छिन्नं गोधनं सर्वं शार्दूलानामिवामिषम् ॥ ७६ ॥

इति विराटपर्व्वणि गोहरणपर्व्वणि विराटोत्तरसंवादे अष्टषष्टोऽध्यायः ॥ ६८ ॥

---

उत्तर उवाच। न मया निर्ज्जिता गावो न मया निर्ज्जिताः परे। कृतं तत्सकलं तेन देवपुत्रेण केनचित् ॥ १ ॥ स हि भीतं द्रवन्तं मां देवपुत्रो न्यवारयत्। स चातिष्ठद्रथोपस्थे वज्र-

संहननो युवा ॥ २ ॥ तेन ते निर्ज्जिता गावः कुरवश्च पराजिताः । तस्य तत् कर्म्म वीरस्य न मया तात तत्कृतम् ॥ ३ ॥ स हि शारद्वतं द्रोणं द्रोणपुत्रञ्च षड्रथान् । सूतपुत्रञ्च भीष्मञ्च चकार विमुखान् शरैः ॥ ४ ॥ दुर्य्योधनं विकर्णञ्च स नागमिव यूथपम् प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलः ॥ ५ ॥ न हास्तिनपुरे त्राणं तव पश्यामि किञ्चन । व्यायामेन परीप्सस्व जीवितं कौरवात्मज ॥ ६ ॥ न मोक्ष्यसे पलायंस्त्वं राजन् युद्धे मनः कुरु । पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि ॥ ७ ॥ स निवृत्तो नरव्याघ्रो मुञ्चन् वज्रनिभान् शरान् । सचिवैः संवृतो राजा रथे नाग इव श्वसन् ॥ ८ ॥ तं दृष्ट्वा रोमहर्षोऽभूदूरुकम्पश्च मारिष । स तत्र सिंहसङ्काशमनीकं व्यधमच्छरैः ॥ ९ ॥ तत् प्रणुद्य रथानीकं सिंहसंहननो युवा । कुरूं स्तान् प्रहसन् राजन् संस्थितान् हृतवाससः ॥ १० ॥ एकेन तेन वीरेण षड्रथाः परिनिर्ज्जिताः । शार्दूलेनेव मत्तेन यथा वनचरा मृगाः ॥ ११ ॥

विराट उवाच । क्व स वीरो महाबाहुर्देवपुत्रो महायशाः । यो मे धनमथाजैषीत् कुरुभिर्ग्रस्तमाहवे ॥ १२ ॥ इच्छामि तमहं द्रष्टुमर्च्चितुञ्च महाबलम् । येन मे त्वञ्च गावश्च रक्षिता देवसूनुना ॥ १३ ॥

उत्तर उवाच । अन्तर्धानं गतस्तत्र देवपुत्रो महाबलः । स तु श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥ १४ ॥

वैशम्पायन उवाच । एवमाख्यायमानन्तु छन्नं सत्रेण पाण्डवम् । वसन्तं तत्र नाज्ञासीद्विराटो वाहिनीपतिः ॥ १५ ॥ ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना । प्रददौ तानि वासांसि विराटदुहितुः स्वयम् ॥ १६ ॥ उत्तरा तु महार्हाणि विविधानि नवानि च । प्रतिगृह्याभवत् प्रीता तानि वासांसि भामिनी ॥१७॥ मन्त्रयित्वा तु कौन्तेय उत्तरेण रहस्तदा । इति कर्त्तव्यतां सर्वां

राजन् पार्थे युधिष्ठिरे ॥ १८ ॥ ततस्तथा तद्व्यदधाद्यथावत् पुरुषर्षभ। सह पुत्रेण मत्स्यस्य प्रहृष्टा भरतर्षभाः ॥ १९ ॥

इति विराटपर्वणि गोहरणपर्वणि विराटोत्तरसंवादे एकोनसप्ततितमोऽध्यायः समाप्तञ्च गोहरणपर्व ॥ ६९ ॥

---

## अथ वैवाहिकपर्व ॥

वैशम्पायन उवाच। ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः। स्नाताः शुक्लाम्बरधराः समये चरितव्रताः ॥ १ ॥ युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः। द्वारि मत्ता यथा नागा भ्राजमाना महारथाः ॥ २ ॥ विराटस्य सभां गत्वा भूमिपालासनेष्वथ। निषेदुः पावकप्रख्याः सर्वे धिष्ण्येष्विवाग्नयः ॥ ३ ॥ तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः। आजगाम सभां कर्त्तुं राजकार्य्याणि सर्वश ॥ ४ ॥ श्रीमतः पाण्डवान् दृष्ट्वा ज्वलतः पावकानिव। मुहूर्त्तमिव च ध्यात्वा सरोषः पृथिवीपतिः ॥ ५ ॥ अथ मत्स्योऽब्रवीत् कङ्कं देवरूपमवस्थितम्। मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ॥ ६ ॥ स किलाक्षातिवापस्त्वं सभास्तारो मया वृतः। अथ राजासने कस्मादुपविष्टस्त्वलङ्कृत

वैशम्पायन उवाच। परिहासेप्सया वाक्यं विराटस्य निशम्य तत्। स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत् ॥ ८ ॥

अर्जुन उवाच। इन्द्रस्याप्यासनं राजन्नयमारोढुमर्हति, ब्रह्मण्यः श्रुतवांस्त्यागी यज्ञशीलो दृढव्रतः ॥ ९ ॥ एष विग्रहवान् धर्म एष वीर्य्यवतांवरः। एष बुद्ध्याधिको लोके तपसाञ्च परायणं ॥ १० ॥ एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये सचराचरे। न चैवान्यः पुमान् वेत्ति न वेत्स्यति कदाचन ॥ ११ ॥ न देवा नासुरा केचिन्न मनुष्या न राक्षसाः। गन्धर्वयक्षप्रवराः सकिन्नर-

महोरगाः ॥ १२ ॥ दीर्घदर्शी महातेजाः पौरजानपदप्रियः । पाण्डवानामतिरथो यज्वा धर्मपरो वशी ॥ १३ ॥ महर्षिकल्पो राजर्षि. सर्वलोकेषु विश्रुतः । बलवान् धृतिमान् दक्ष सत्यवादी जितेन्द्रिय ॥ १४ ॥ धनैश्च सञ्चयैश्चैव शक्रवैश्रवणोपम. । यथा मनुर्महातेजा लोकानां परिरक्षिता ॥ १५ ॥ एवमेष महातेजाः प्रजानुग्रहकारकः । अयं कुरूणामृषभो धर्मराजो युधिष्ठिरः ॥१६॥ अस्य कीर्त्तिः स्थिता लोके सूर्य्यस्येवोद्यतः प्रभा । संसरन्ति दिशः सर्वा यशसोऽस्य इवांशव ॥ १७ ॥ उदितस्येव सूर्य्यस्य तेजसो नु गभस्तयः । एनं दशसहस्राणि कुञ्जराणां तरस्विनाम् ॥ १८ ॥ अन्वयुः पृष्ठतो राजन् यावदध्यावसत कुरून् । त्रिंशदेवं सहस्राणि रथाः काञ्चनमालिनः ॥ १९ ॥ सदश्वैरुपसम्पन्नाः पृष्ठतोऽनुययुस्तदा । एनमष्टशताः सूताः सुमृष्टमणिकुण्डलाः ॥ २० ॥ अब्रुवन्मागधैः सार्द्धं पुरा शक्रमिवर्षयः । इमं नित्यमुपासन्त कुरवः किङ्करा यथा ॥ २१ ॥ सर्वे च राजन् राजानो धनेश्वरमिवामराः । एष सर्वान् महीपालान् करदान् समकारयत् ॥ २२ ॥ वैश्यानिव महाभागो विवशान् स्ववशानपि । अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम् ॥ २३ ॥ उपजीवन्ति राजानमेन सुचरितव्रतम् । एष वृद्धाननाथांश्च पङ्गूनन्धांश्च मानवान् ॥ २४ ॥ पुत्रवत् पालयामास प्रजा धर्मेण वै विभु । एष धर्मे दमे चैव क्रोधे चापि जितव्रतः ॥ २५ ॥ महाप्रसादो ब्रह्मण्य. सत्यवादी च पार्थिवः । श्रीप्रतापेन चैतस्य तप्यते स सुयोधनः ॥ २६ ॥ सगणः सह कर्णेन सौबलेनापि वा विभुः । न शक्यन्तेऽस्य गुणाः प्रसङ्ख्यातुं नरेश्वर ॥२७॥ एष धर्मपरो नित्यमानृशंस्यश्च पाण्डवः । एवमुक्तो महाराजः पाण्डवः पार्थिवर्षभः । कथं नार्हति राजार्हमासनं पृथिवीपते ॥ २८ ॥

इति विराटपर्वणि वैवाहिकपर्वणि पाण्डवप्रकाशे सप्ततितमोऽध्यायः ॥ ७० ॥

विराट उवाच। यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः। कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ॥ १ ॥ नकुलः सहदेवो वा द्रौपदी वा यशस्विनी। यदा द्यूतजिताः पार्था न प्राज्ञायन्त ते क्वचित् ॥ २ ॥

अर्जुन उवाच। य एष बल्लवो ब्रूते सूदस्तव नराधिप। एष भीम महाराज भीमवेगपराक्रमः ॥ ३ ॥ एष क्रोधवशान् हत्वा पर्वते गन्धमादने। सौगन्धिकानि दिव्यानि कृष्णार्थे समुपाहरत् ॥ ४ ॥ गन्धर्व एष वै हन्ता कीचकानां दुरात्मनाम्। व्याघ्रानृक्षान् वराहांश्च हतवान् स्त्रीपुरे तव ॥ ५ ॥ यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तप। गोसङ्ख्यः सहदेवश्च माद्रीपुत्रौ महारथौ ॥ ६ ॥ शृङ्गारवेशाभरणौ रूपवन्तौ यशस्विनौ। महारथसहस्राणां समर्थौ भरतर्षभौ ॥ ७ ॥ एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी। सैरिन्ध्री द्रौपदी राजन् यस्यार्थे कीचका हताः ॥ ८ ॥ अर्जुनोऽहं महाराज व्यक्तं ते श्रोत्रमागतः। भीमादवरजः पार्थो यमाभ्यां चापि पूर्वजः ॥ ९ ॥ उषिताः स्मो महाराज सुखं तव निवेशने। अज्ञातवासमुषिता गर्भवास इव प्रजाः ॥ १० ॥

वैशम्पायन उवाच। यदार्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः। तदार्जुनस्य वैराटिः कथयामास विक्रमम्। पुनरेव स तान् पार्थान् दर्शयामास चोत्तरः ॥ ११ ॥

उत्तर उवाच। य एष जाम्बूनदशुद्धगौरतनुर्महान् सिंह इव प्रवृद्धः। प्रचण्डघोणः पृथुदीर्घनेत्रस्ताम्रायताक्षः कुरुराज एषः ॥ १२ ॥ अयं पुनर्मत्तगजेन्द्रगामी प्रतप्तचामीकरशुद्धगौरः। पृथ्वायतांसो गुरुदीर्घबाहुर्वृकोदरः पश्यत पश्यतैनम् ॥ १३ ॥ यस्त्वेष पार्श्वेऽस्य महाधनुष्मान् श्यामो युवा वारणयूथपोपमः। सिंहोन्नतांसो गजराजगामी पद्मायताक्षोऽर्जुन एष वीरः ॥ १४ ॥

राज्ञः समीपे पुरुषोत्तमौ तु यमाविमौ विष्णुमहेन्द्रकल्पौ । मनुष्यलोके सकले समोऽस्ति ययोर्न रूपे न बले न शीले ॥१५॥ आभ्यान्तु पार्श्वे कनकोत्तमाङ्गी यैषा प्रभा मूर्त्तिमतीव गौरी । नीलोत्पलाभा सुरदेवतेव कृष्णा स्थिता मूर्त्तिमतीव लक्ष्मी ॥ १६ ॥

वैशम्पायन उवाच । एवं निवेद्य तान् पार्थान् पाण्डवान् पञ्च भूपते. । ततोऽर्जुनस्य वैराटि. कथयामास विक्रमम् ॥ १७ ॥

उत्तर उवाच । अयं स द्विषतां हन्ता मृगाणामिव केशरी । अचरद्रथवृन्देषु निघ्नंस्तांस्तान् वरान् रथान् ॥ १८ ॥ अनेन विद्धो मातङ्गो महानेकेषुणा हत. । सुवर्णकच्यः संग्रामे दन्ताभ्यामगमन्महीम् ॥ १९ ॥ अनेन विजिता गावो जिताश्च कुरवो युधि । अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ ॥ २० ॥

वैशम्पायन उवाच । तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् । उत्तरं प्रत्युवाचेममभिपन्नो युधिष्ठिरे ॥ २१ ॥ प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये । उत्तराञ्च प्रयच्छामि पार्थाय यदि मन्यसे ॥ २२ ॥

उत्तर उवाच । आर्य्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतम् । पूज्यन्तां पूजनार्हाश्च महाभागाश्च पाण्डवा· ॥ २३ ॥

विराट उवाच । अहं खल्वपि संग्रामे शत्रूणां वशमागत । मोक्षितो भीमसेनेन गावश्चापि जितास्तथा ॥ २४ ॥ एतेषा बाहुवीर्य्येण अस्माकञ्च जयो मृधे । एवं सर्वे सहामात्याः कुन्तीपुत्रं युधिष्ठिरम् ॥ २५ ॥ प्रसादयामो भद्रन्ते सानुजं पाण्डवर्षभम् । यदस्माभिरजानद्भिः किञ्चिदुक्तो नराधिप । हन्तुमर्हति तत्सर्वं धर्मात्मा ह्येष पाण्डवः ॥ २६ ॥

वैशम्पायन उवाच । ततो विराटः परमं प्रहृष्टः समेत्य राज्ञा समयञ्चकार । राज्यञ्च सर्वं विससर्ज्ज तस्मै सदण्डकोषं सपुरं महात्मा ॥ २७ ॥ पाण्डवांश्च ततः सर्वान् मत्स्यराज· प्रताप-

वान्। धनञ्जयं पुरस्कृत्य दिष्ट्यादिष्ट्येति चाब्रवीत् ॥ २८ ॥ समुपाघ्राय मूर्द्धानं संश्लिष्य च पुनः पुनः। युधिष्ठिरञ्च भीमञ्च माद्रीपुत्रौ च पाण्डवौ ॥ २९ ॥ नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः। स प्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् ॥३०॥ दिष्ट्या भवन्तः सम्प्राप्ताः सर्वे कुशलिनो वनात्। दिष्ट्या सम्पालितं कृच्छ्रं अज्ञातं वै दुरात्मभिः ॥ ३१ ॥ इदञ्च राज्यं पार्थाय यच्चान्यदपि किञ्चन। प्रतिगृह्णन्तु तत् सर्वं पाण्डवा अविशङ्कया ॥ ३२ ॥ उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः। अयं ह्यौपयिको भर्त्ता तस्याः पुरुषसत्तमः ॥ ३३ ॥ एवमुक्तो धर्मराजः पार्थमैक्षद्धनञ्जयम्। ईक्षितश्चार्जुनो भ्राता मत्स्यं वचनमब्रवीत् ॥ ३४ ॥ प्रतिगृह्णाम्यहं राजन् स्नुषां दुहितरं तव। युक्त एव हि सम्बन्धो मत्स्यभारतयोरपि ॥ ३५ ॥

इति विराटपर्वणि वैवाहिकपर्व्वणि उत्तराविवाहप्रस्तावे एकसप्ततोऽध्यायः ॥ ७१ ॥

---

विराट उवाच। किमर्थं पाण्डवश्रेष्ठ भार्य्यां दुहितरं मम। प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ॥ १ ॥

अर्जुन उवाच। अन्तःपुरेऽहमुषित सदा पश्यन् सुतां तव। रहस्यञ्च प्रकाशञ्च विश्वस्ता पितृवन्मयि ॥ २ ॥ प्रियो बहुमतश्चासं नर्त्तको गीतकोविदः। आचार्य्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ३ ॥ वयःस्थया तया राजन् सह संवत्सरोषितः। अतिशङ्का भवेत् स्थाने तव लोकस्य वा विभो ॥ ४ ॥ तस्मान्निमन्त्रये ऽहन्ते दुहितां मनुजाधिप। शुद्धो जितेन्द्रियो दान्तस्तस्याः शुद्धिः कृता मया ॥ ५ ॥ स्नुषायां दुहितुश्चापि पुत्रे चात्मनि वा पुन।

अत शङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ ६ ॥ अभिशापादहं
भीतो मिथ्यावादात् परन्तप । स्नुषार्थमुत्तरां राजन् प्रति-
गृह्णामि ते सुताम् ॥ ७ ॥ स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशु-
र्यथा । दयितश्चक्रहस्तस्य बाल एवास्त्रकोविदः ॥ ८ ॥ अभि-
मन्युर्महाबाहुः पुत्रो मम विशाम्पते । जामाता तव युक्तो वै
भर्त्ता च दुहितुस्तव ॥ ९ ॥

विराट उवाच । उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनञ्जये । य
एवं धर्मनित्यश्च जातज्ञानश्च पाण्डवः ॥ १० ॥ यत् कृत्यं मन्यसे
पार्थ क्रियतां तदनन्तरम् । सर्वे कामाः समृद्धाश्च सम्बन्धी यस्य
मेऽर्ज्जुनः ॥ ११ ॥

वैशम्पायन उवाच । एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधि-
ष्ठिरः । अन्वशासत् समं योगं समये मत्स्यपार्थयोः ॥ १२ ॥
ततो मित्रेषु सर्वेषु वासुदेवे च भारत । प्रेषयामास कौन्तेयो
विराटश्च महीपतिः ॥ १३ ॥ ततस्त्रयोदशे वर्षे निवृत्ते पञ्च
पाण्डवाः । उपप्लव्ये विराटस्य समपद्यन्त सर्वशः ॥ १४ ॥ अभि-
मन्युञ्च बीभत्सुरानिनाय जनार्द्दनम् । आनर्त्तेभ्योऽपि दाशार्हा-
मानयामास पाण्डवः ॥ १५ ॥ काशीराजश्च शैव्यश्च प्रीयमाणौ
युधिष्ठिरे । अक्षौहिणीभ्यां सहितावागतौ पृथिवीपती ॥ १६ ॥
अक्षौहिण्या च सहितो यज्ञसेनो महाबलः । द्रौपद्याश्च सुता
वीराः शिखण्डी चापराजितः ॥ १७ ॥ धृष्टद्युम्नश्च दुर्द्धर्षः सर्व-
शस्त्रभृताम्वरः । समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः
॥ १८ ॥ वेदाध्ययनसम्पन्नाः सर्वे शूरास्तनुत्यजः । तानागता-
नभिप्रेक्ष्य मत्स्यो धर्मभृताम्वरः ॥ १९ ॥ पूजयामास विधिवत्
सभृत्यबलवाहनान् । प्रीतोऽभवद्दुहितरं दत्त्वा तामभिमन्यवे
॥ २० ॥ ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः । तत्रागमद्वासु-
देवो वनमाली हलायुधः ॥ २१ ॥ कृतवर्मा च हार्द्दिक्यो युयु-

साम्बश्च सात्यकिः। अनाधृष्टिस्तथाक्रूरः शाम्बो निषठ एव च ॥ २२ ॥ अभिमन्युमुपादाय सह मात्रा परन्तपाः। इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ॥ २३ ॥ आययुः सहिताः सर्वे परिसम्वत्सरोषिताः। दशनागसहस्राणि हयानाञ्च दशायुतम् ॥ २४ ॥ रथानामर्वुदं पूर्णं निखर्वञ्च पदातिनाम्। वृष्ण्यन्धकाश्च बहवो भोजाश्च परमौजसः ॥ २५ ॥ अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम्। स्त्रियो रत्नानि वासांसि पृथक् पृथगनेकशः ॥ २६ ॥ ततो विवाहो विधिवद्ववृधे मत्स्यपार्थयोः। ततः शङ्खाश्च भेर्य्यश्च गोमुखाडम्बरास्तथा ॥ २७ ॥ पार्थैः संयुज्यमानस्य नेदुर्मत्स्यस्य वेश्मनि। उच्चावचान्मृगान् जघ्नुर्मेध्यांश्च शतशः पशून् ॥ २८ ॥ सुरामैरेयपानानि प्रभूतान्यभ्यहारयन्। गायनाख्यानशीलाश्च नटवैतालिकास्तथा ॥ २९ ॥ स्तुवन्तस्तानुपातिष्ठन् सूताश्च सह मागधैः। सुदेष्णाञ्च पुरस्कृत्य मत्स्यानाञ्च वरस्त्रियः ॥ ३० ॥ आजग्मुश्चारुसर्वाङ्ग्यः सुमृष्टमणिकुण्डलाः। वर्णोपपन्नास्ता नार्य्यो रूपवत्यः स्वलङ्कृताः ॥ ३१ ॥ सर्वाश्चाभ्यभवत् कृष्णा रूपेण यशसा श्रिया। परिवार्य्योत्तरां तास्तु राजपुत्रीमलङ्कृताम् ॥ ३२ ॥ सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे। ता प्रत्यगृह्णात् कौन्तेयः सुतस्यार्थे धनञ्जयः ॥ ३३ ॥ सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा। तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन् ॥ ३४ ॥ स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः। प्रतिगृह्य च ता पार्थः पुरस्कृत्य जनार्द्दनम् ॥ ३५ ॥ विवाहं कारयामास सौभद्रस्य महात्मनः। तस्मै सप्तसहस्राणि हयाना वातरंहसाम् ॥ ३६ ॥ द्वे च नागशते मुख्ये प्रादाद्बहुधनं तदा। हुत्वा सम्यक् समिद्धाग्निं अर्च्चयित्वा द्विजन्मनः ॥ ३७ ॥ राज्यं बलञ्च कोषञ्च सर्वमात्मानमेव च। कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ॥ ३८ ॥ ब्राह्मणेभ्यो ददौ वित्तं यदुपाहर-

दृष्युतः । गोसहस्राणि रत्नानि वस्त्राणि विविधानि च ॥ ३९ ॥ भूषणानि च मुख्यानि यानानि शयनानि च । भोजनानि च हृद्यानि पानानि विविधानि च ॥ ४० ॥ तन्महोत्सवसङ्काशं हृष्ट-पुष्टजनावृतम् । नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ४१ ॥

इति विराटपर्व्वणि वैवाहिकपर्व्वणि उत्तराविवाहे
द्विसप्ततोऽध्यायः ॥ ७२ ॥

---

समाप्तम् वैवाहिकपर्व्वं ।

---

समाप्तञ्च विराटपर्व्वं ।

---

# श्रीमहाभारतम्।

॥ उद्योगपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत ॥

वैशम्पायन उवाच। कृत्वा विवाहन्तु कुरुप्रवीरास्तदाभिमन्योर्मुदिताः स्वपक्षाः। विश्रम्य रात्रावुषसि प्रतीताः सभां विराटस्य ततोऽभिजग्मुः ॥ १ ॥ सभा तु सा मत्स्यपतेः समृद्धा मणिप्रवेकोत्तमरत्नचित्रा। न्यस्तासना माल्यवती सुगन्धा तामभ्ययुस्ते नरराजवृद्धाः ॥ २ ॥ अथासनान्याविशतां पुरस्तादुभौ विराटद्रुपदौ नरेन्द्रौ। वृद्धाश्च मान्याः पृथिवीपतीनां पित्रा समं रामजनार्द्दनौ च ॥ ३ ॥ पाञ्चालराजस्य समीपतस्तु शिनिप्रवीरः सहरौहिणेयः। मत्स्यस्य राज्ञस्तु सुसन्निकृष्टे जनार्द्दनश्चैव युधिष्ठिरश्च ॥ ४ ॥ सुताश्च सर्व्वे द्रुपदस्य राज्ञो भीमार्ज्जुनौ माद्रवतीसुतौ च। प्रद्युम्नशाम्बौ च युधि प्रवीरौ विराटपुत्रैश्च सहाभिमन्युः ॥ ५ ॥ सर्व्वे च शूराः पितृभिः समाना वीर्य्येण रूपेण तथा बलेन। उपाविशन् द्रौपदेयाः कुमाराः सुवर्णचित्रेषु वरासनेषु ॥ ६ ॥ तथोपविष्टेषु महारथेषु विभ्राजमानाभरणाम्बरेषु। रराज सा राजवती समृद्धा ग्रहैरिव द्यौर्विमलैरुपेता ॥ ७ ॥ ततः कथास्ते

समवाययुक्ता कृत्वा विचित्राः पुरुषप्रवीराः। तस्थुर्मुहूर्त्तं परिचिन्तयन्त कृष्णा नृपास्ते समुदीक्षमाणाः॥ ८॥ कथान्तमासाद्य च माधवेन सङ्घादिता पाण्डवकार्य्यहेतोः। ते राजसिंहाः सहिता ह्यशृण्वन्वाक्यं महार्थञ्च महोदयञ्च॥ ९॥

श्रीकृष्ण उवाच। सर्वैर्भवद्भिर्विदितं यथायं युधिष्ठिरः सौबलेनाक्षवत्याम्। जितो निकृत्यापहृतञ्च राज्यं वनप्रवासे समयः कृतश्च॥ १०॥ शक्तैर्विजेतुं तरसा महीं च सत्ये स्थितैः सत्यरथैर्यथावत्। पाण्डोः सुतैस्तद्व्रतमुग्ररूपं वर्षाणि षट् सप्त च चीर्णमग्र्यैः॥ ११॥ त्रयोदशश्चैव सुदुस्तरोऽयमज्ञायमानैर्भवतां समीपे। क्लेशानसह्यान् विविधान् सहद्भिर्यथोदितं तद्विदितञ्च सर्वैः॥ १२॥ एतैः परप्रेष्यनियोगयुक्तैस्तीर्णो महद्भिः स्वबलेन राजन्। एवं गते धर्मसुतस्य राज्ञो दुर्योधनस्यापि च यद्धितं स्यात्॥ १३॥ तच्चिन्तयध्वं कुरुपाण्डवानां धर्म्यं च युक्तञ्च यशस्करञ्च। अधर्मयुक्तं न च कामयेत राज्यं सुराणामपि धर्मराजः॥ १४॥ धर्मार्थयुक्तन्तु महीपतित्वं ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत्। पित्र्यं हि राज्यं विदितं नृपाणां यथापकृष्टं धृतराष्ट्रपुत्रैः॥ १५॥ मिथ्योपचारेण यथाह्यनेन कृच्छ्रं महत् प्राप्तमसह्यरूपम्। न चापि पार्थो विजितो रणे तैः स्वतेजसा धृतराष्ट्रस्य पुत्रैः॥ १६॥ तथापि राजा सहितः सुहृद्भिरभीप्सतेऽनामयमेव तेषाम्। यत्तु स्वयं पाण्डुसुतैर्विजित्य समाहृतं भूमिपतीन् निपीड्य॥ १७॥ तत् प्रार्थयन्ते पुरुषप्रवीराः कुन्तीसुता माद्रवतीसुतौ च। बालास्त्विमे तैर्विविधैरुपायैः सम्प्रार्थिता हन्तुममित्रसङ्घैः॥ १८॥ राज्यं जिहीर्षद्भिरसद्भिरुग्रैः सर्वञ्च तद्वो विदितं यथावत्। तेषाञ्च लोभं प्रसमीक्ष्य वृद्धं धर्मज्ञतां चापि युधिष्ठिरस्य॥ १९॥ सम्बन्धितां चापि समीक्ष्य तेषां मतिं कुरुध्वं सहिताः पृथक् च। इमे च सत्येऽभिरताः सदैव तं पालयित्वा समयं यथावत्॥ २०॥

अतोऽन्यथा तैरुपचर्य्यमाणा हन्युः समेतान् धृतराष्ट्रपुत्रान् । तैर्विप्रकारञ्च निशम्य कार्य्यं सुहृज्जनास्तान् परिवारयेरन् ॥ २१ ॥ युद्धेन बाधेयुरिमांस्तथैव तैर्बध्यमाना युधि तांश्च हन्युः । अथापि नेमेऽल्पतया समर्थास्तेषां जयायेति भवेन्मतं वः ॥ २२ ॥ समेत्य सर्व्वे सहिताः सुहृद्भिस्तेषां विनाशाय यतेयुरेव । दुर्य्योधनस्यापि मतं यथावन्न ज्ञायते किन्नु करिष्यतीति ॥ २३ ॥ अज्ञायमाने च मते परस्य किं स्यात् समारभ्यतमं मतं वः । तस्मादितो गच्छतु धर्म्मशीलः शुचिः कुलीनः पुरुषोऽप्रमत्तः ॥ २४ ॥ दूतः समर्थः प्रशमाय तेषां राज्यार्द्धदानाय युधिष्ठिरस्य । निशम्य वाक्यं तु जनार्द्दनस्य धर्म्मार्थयुक्तं मधुरं समञ्च । समाददे वाक्यमथाग्रजोऽस्य सम्पूज्य वाक्यं तदतीव राजन् ॥ २५ ॥

इति उद्योगपर्व्वणि सैन्योद्योगपर्व्वणि श्रीकृष्णवाक्ये प्रथमोऽध्यायः ॥ १ ॥

---

बलदेव उवाच । श्रुतं भवद्भिर्गदपूर्व्वजस्य वाक्यं यथा धर्म्मवदर्थवच्च । अजातशत्रोश्च हितं हितञ्च दुर्य्योधनस्यापि तथैव राज्ञः ॥ १ ॥ अर्द्धं हि राज्यस्य विसृज्य वीराः कुन्तीसुतास्तस्य कृते यतन्ते । प्रदाय चार्द्धं धृतराष्ट्रपुत्रः सुखी सहास्माभिरतीव मोदेत ॥ २ ॥ लब्ध्वा हि राज्यं पुरुषप्रवीराः सम्यक् प्रवृत्तेषु परेषु चैव । ध्रुवं प्रशान्ताः सुखमाविशेयुस्तेषां प्रशान्तिश्च हितं प्रजानाम् ॥ ३ ॥ दुर्य्योधनस्यापि मतञ्च वेत्तुं वक्तुं च वाक्यानि युधिष्ठिरस्य । प्रियं मम स्याद्यदि चात्र कश्चिद्व्रजेत शमार्थं कुरुपाण्डवानाम् ॥ ४ ॥ स भीष्ममामन्त्र्य कुरुप्रवीरं वैचित्रवीर्य्यञ्च महानुभावम् । द्रोणं सपुत्रं विदुरं कृपञ्च गान्धारराजञ्च

सम्भूतपुत्रम् ॥ ५ ॥ सर्वे च येऽन्ये धृतराष्ट्रपुत्रा बलप्रधाना निगम-
प्रधानाः। स्थिताश्च धर्मेषु यथा स्वकेषु लोकप्रवीरा श्रुतकाल-
वृत्ताः ॥ ६ ॥ एतेषु सर्वेषु समागतेषु पौरेषु वृद्धेषु च सङ्गतेषु।
ब्रवीतु वाक्यं प्रणिपातयुक्तं कुन्तीसुतस्यार्थकरं यथा स्यात् ॥ ७ ॥
सर्वास्ववस्थासु च ते न कोप्या ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः।
प्रियाभ्युपेतस्य युधिष्ठिरस्य द्यूते प्रमत्तस्य हृतं स्वराज्यम् ॥ ८ ॥
निवार्यमाणश्च कुरुप्रवीरः सर्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः। गान्धार-
राजस्य सुतं मताक्षं समाह्वयद्देवितुमाजमीढः ॥ ९ ॥ दुरोदरा-
स्तत्र सहस्रशोऽन्ये युधिष्ठिरो यान् विषहेत जेतुम्। उत्सृज्य
तान् सौबलमेव चायं समाह्वयत्तेन जितोऽक्षवत्याम् ॥ १० ॥ स
दीव्यमानः प्रतिदीव्यतेन यथेषु नित्यं तु पराङ्मुखेषु। संरम्भ-
माणो विजितः प्रसह्य तत्रापराधः शकुनेर्न कश्चित् ॥ ११ ॥ तस्मात्
प्रणम्यैव वचो ब्रवीतु वैचित्रवीर्यं बहुसामयुक्तम्। तथा हि
शक्यो धृतराष्ट्रपुत्रः स्वार्थे नियोक्तुं पुरुषेण तेन ॥ १२ ॥ अयुद्ध-
माकाङ्क्षत कौरवाणां साम्नैव दुर्योधनमाह्वयध्वम्। साम्ना जितो-
ऽर्थोऽर्थकरो भवेत युद्धेन यो भविता नेह सोऽर्थः ॥ १३ ॥

वैशम्पायन उवाच। एवं ब्रुवत्येव मधुप्रवीरे शिनिप्रवीरः
सहसोत्पपात। तच्चापि वाक्यं परिनिन्द्य तस्य समाददे वाक्य-
मिदं समन्युः ॥ १४ ॥ यादृश पुरुषस्यात्मा तादृशं सम्प्रभाषते।
यथारूपोऽन्तरात्मा ते तथा रूपं प्रभाषसे ॥ १५ ॥ सन्ति वै
पुरुषाः शूराः सन्ति कापुरुषास्तथा। उभावेतौ दृढौ पक्षौ
दृश्येते पुरुषान् प्रति ॥ १६ ॥ एकस्मिन्नेव जायेते कुले क्लीबमहा-
बलौ। फलाफलवती शाखे यथैकस्मिन् वनस्पतौ ॥ १७ ॥ नाभ्य-
सूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज। ये तु शृण्वन्ति ते वाक्यं
तानसूयामि माधव ॥ १८ ॥ कथं हि धर्मराजस्य दोषमल्पमपि
ब्रुवन्। लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ॥ १९ ॥ समा-

इय महात्मानं जितवन्तोऽक्षकोविदाः। अनहर्षं यथाश्रद्धं तेषु
पराजयः कुतः ॥ २० ॥ यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः
सह। अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत् ॥ २१ ॥ समा-
हूय तु कौन्तेय क्षत्रधर्मरतं सदा। निकृत्या जितवन्तस्ते किन्नु
तेषां परं शुभम् ॥ २२ ॥ कथं प्रणिपतेच्चायमिह कृत्वा पणं परम्।
वनवासाद्विमुक्तस्तु प्राप्तं पैतामहं पदम् ॥ २३ ॥ यद्ययं पर-
वित्तानि कामयेत युधिष्ठिरः। एवमप्ययमत्यन्तं परं नार्हति
याचितुम् ॥ २४ ॥ कथञ्च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः।
निवृत्तवासान् कौन्तेयान् य आहुर्विदिता इति ॥ २५ ॥ अनु-
नीता हि भीष्मेण द्रोणेन च महात्मना। न व्यवस्यन्ति पाण्डूनां
प्रदातुं पैतृकं पदम् ॥ २६ ॥ अहन्तु तान् शितैर्बाणैरनुनीय रणे
बलात्। पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः ॥ २७ ॥
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः। गमिष्यन्ति सहा-
मात्या यमस्य सदनं प्रति ॥ २८ ॥ न हि ते युयुधानस्य संरब्धस्य
युयुत्सतः। वेगं समर्थाः संसोढुं वज्रस्येव महीधराः ॥ २९ ॥ को
हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि। माञ्चापि विषहेत् को
नु कश्च भीमं दुरासदम् ॥ ३० ॥ यमौ च दृढधन्वानौ यमकालो-
पमद्युती। को जिजीविषुरासीदेद्धृष्टद्युम्नञ्च पार्षतम् ॥ ३१ ॥
पञ्चेमान् पाण्डवेयांस्तु द्रौपद्याः कीर्त्तिवर्द्धनान्। समप्रमाणान्
पाण्डूनां समवीर्य्यान् मदोत्कटान् ॥ ३२ ॥ सौभद्रञ्च महेष्वास-
ममरैरपि दुःसहम्। गदप्रद्युम्नशाम्बांश्च कालवज्रानलोपमान्
॥ ३३ ॥ ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह। कर्णेन तु
निहत्याजावभिषेक्ष्याम पाण्डवम् ॥ ३४ ॥ नाधर्मो विद्यते कश्चि-
च्छत्रून् हत्वाततायिनः। अधर्म्यमयशस्यञ्च शात्रवाणां प्रयाचनम्
॥ ३५ ॥ हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः। विसृष्टं
धृतराष्ट्रेण राज्यं प्राप्नोतु पाण्डवः ॥ ३६ ॥ अद्य पाण्डुसुतो

राज्यं लभतां वा युधिष्ठिरः। निहता वा मया सर्वे शेष्यन्ते वसुधातले ॥ २७ ॥

इति उद्योगपर्वणि सैन्योद्योगपर्वणि सात्यकिक्रोधवाक्ये द्वितीयोऽध्यायः ॥ २ ॥

---

द्रुपद उवाच। एवमेतन्महाबाहो भविष्यति न संशयः। न हि दुर्य्योधनो राज्यं मधुरेण प्रदास्यति ॥ १ ॥ अनुवर्त्स्यति तच्चापि धृतराष्ट्रः सुतप्रियः। भीष्मद्रोणौ च कार्पण्यात् मौर्ख्याद्राधेयसौबलौ ॥ २ ॥ बलदेवस्य वाक्यन्तु मम ज्ञाने न युज्यते। एतद्धि पुरुषेणाग्रे कार्य्यं सुनयमिच्छता ॥ ३ ॥ न तु वाच्यो मृदुवचो धार्त्तराष्ट्रः कथञ्चन। न हि मार्द्दवसाध्योऽसौ पापबुद्धिर्मतो मम ॥ ४ ॥ मार्दवं गर्दभे कुर्य्याद्गोषु तीक्ष्णं समाचरेत्। मृदु दुर्य्योधने वाक्यं यो ब्रूयात् पापचेतसि ॥ ५ ॥ मृदु वै मन्यते पापो भाषमाणमशक्तिकम्। जितमर्थं विजानीयादबुधो मार्द्दवे सति ॥ ६ ॥ एतच्चैव करिष्यामो यत्नश्च क्रियतामिह। प्रस्थापयामो मित्रेभ्यो बलान्युद्योजयन्तु नः ॥ ७ ॥ शल्यस्य धृष्टकेतोश्च जयत्सेनस्य वा विभो। कैकेयानाञ्च सर्वेषां दूता गच्छन्तु शीघ्रगाः ॥ ८ ॥ स च दुर्य्योधनो नूनं प्रेषयिष्यति सर्वशः। पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदनम् ॥ ९ ॥ तत्त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने। महद्धि कार्य्यं वोढव्यमिति मे वर्त्तते मतिः ॥ १० ॥ शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः। भगदत्ताय राज्ञे च पूर्वसागरवासिने ॥ ११ ॥ अमितौजसे तथोग्राय हार्द्दिक्यायाहुकाय च। दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो ॥ १२ ॥ आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः। सेनजित् प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः ॥ १३ ॥ वाह्लीको मुञ्जकेशश्च चैद्याधिपति-

देव च । सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः ॥ १४ ॥ शकानां पह्लवानाञ्च दरदानाञ्च ये नृपाः । सुरारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः ॥ १५ ॥ नीलश्च वीरधर्मा च भूमिपालश्च वीर्य्यवान् । दुर्ज्जयो दन्तवक्रश्च रुक्मी च जनमेजयः ॥ १६ ॥ आषाढो वायुवेगश्च पूर्वपाली च पार्थिवः । भूरितेजा देवकश्च एकलव्यः सहात्मजैः ॥ १७ ॥ कारूषकाश्च राजानः क्षेमधूर्त्तिश्च वीर्य्यवान् । काम्बोजा ऋषिका ये च पश्चिमानूपकाश्च ये ॥ १८ ॥ जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः । क्राथपुत्रश्च दुर्द्धर्षः पार्वतीयाश्च ये नृपाः ॥ १९ ॥ जानकिश्च सुशर्मा च मणिमान् पोतिमत्सकः । पांशुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्य्यवान् ॥ २० ॥ पौण्ड्रश्च दण्डधारश्च बृहत्सेनश्च वीर्य्यवान् । अपराजितो निषादश्च श्रेणिमान् वसुमानपि ॥ २१ ॥ बृहद्बलो महौजाश्च बाहुः परपुरञ्जयः । समुद्रसेनो राजा च सह पुत्रेण वीर्य्यवान् ॥ २२ ॥ उद्भवः क्षेमकश्चैव वाटधानश्च पार्थिवः । श्रुतायुश्च दृढायुश्च शाल्वपुत्रश्च वीर्य्यवान् ॥ २३ ॥ कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्मदः । एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते ॥ २४ ॥ अयञ्च ब्राह्मणो विद्वान् मम राजन् पुरोहितः । प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयताम् ॥२५॥ यथा दुर्य्योधनो वाच्यो यथा शान्तनवो नृपः । धृतराष्ट्रो यथा वाच्यो द्रोणश्च रथिनां वरः ॥ २६ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि द्रुपदवाक्ये तृतीयोऽध्यायः ॥ ३ ॥

---

वासुदेव उवाच । उपपन्नमिदं वाक्यं सोमकानां धुरन्धरे । अर्थसिद्धिकरं राज्ञः पाण्डवस्यामितौजसः ॥ १ ॥ एतच्च पूर्वकार्य्यं

नः सुनीतमभिकाङ्क्षताम् । अन्यथा ह्याचरन् कर्म पुरुषः स्यात् सुबालिशः ॥ २ ॥ किन्तु सम्बन्धकं तुल्यमस्माकं कुरुपाण्डुषु । यथेष्टं वर्त्तमानेषु पाण्डवेषु च तेषु च ॥ ३ ॥ ते विवाहार्थमानीता वयं सर्वे तथा भवान् । कृते विवाहे मुदिता गमिष्यामो गृहान् प्रति ॥ ४ ॥ भवान् वृद्धतमो राज्ञां वयसा च श्रुतेन च । शिष्य-वत्ते वयं सर्वे भवामेह न संशयः ॥ ५ ॥ भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते । आचार्य्ययोः सखा चासि द्रोणस्य च कृपस्य च ॥६॥ स भवान् प्रेषयत्वद्य पाण्डवार्थकरं वचः । सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद्भवान् ॥ ७ ॥ यदि तावच्छमं कुर्य्यात् न्यायेन कुरुपुङ्गवः । न भवेत् कुरुपाण्डूनां सौभ्रात्रेण महान् क्षयः ॥ ८ ॥ अथ दर्पान्वितो मोहान्न कुर्य्याद्धृतराष्ट्रजः । अन्येषां प्रेषयित्वा च पश्चादस्मान् समाह्वयेः ॥ ९ ॥ ततो दुर्य्योधनो मन्दः सहामात्यः सबान्धवः । निष्ठामापत्स्यते मूढ क्रुद्धे गाण्डीव-धन्वनि ॥ १० ॥

वैशम्पायन उवाच । ततः सत्कृत्य वार्ष्णेयं विराट पृथिवी-पतिः । गृहान् प्रस्थापयामास सगणं सहबान्धवम् ॥११॥ द्वारकान्तु गते कृष्णे युधिष्ठिरपुरोगमाः । चक्रुः साङ्ग्रामिकं सर्वं विराटश्च महीपतिः ॥ १२ ॥ ततः सम्प्रेषयामास विराटः सह बान्धवैः । सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः ॥ १३ ॥ वचनात् कुरु-सिंहानां मत्स्यपाञ्चालयोश्च ते । समाजग्मुर्महीपालाः सम्प्रहृष्टा महाबलाः ॥ १४ ॥ तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्‌-बलम् । धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन् ॥ १५ ॥ समा-कुला मही राजन् कुरुपाण्डवकारणात् । तदा समभवत् कृत्स्ना सम्प्रयाणे महीक्षिताम् ॥ १६ ॥ सङ्कुला च तदा भूमिश्चतुरङ्ग-बलान्विता । बलानि तेषां वीराणामागच्छन्ति ततस्ततः ॥ १७ ॥ चालयन्तीव गां देवीं सपर्वतवनामिमाम् । ततः प्रज्ञावयोवृद्धं

पाञ्चाल्यः स्वपुरोहितम् । कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः ॥ १७ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि पाञ्चाल्यपुरोहितयाने चतुर्थोऽध्यायः ॥ ४ ॥

---

द्रुपद उवाच। भूतानां प्राणिनः श्रेष्ठाः प्राणिना बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातय ॥ १ ॥ द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः। कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः ॥ २ ॥ स भवान् कृतबुद्धीना प्रधान इति मे मतिः। कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च ॥ ३ ॥ प्रज्ञया सदृशश्चासि शुक्रेणाङ्गिरसेन च। विदितञ्चापि ते सर्वं यथावृत्तः स कौरवः ॥ ४ ॥ पाण्डवश्च यथावृत्त. कुन्तीपुत्रो युधिष्ठिरः। धृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवा परै. ॥ ५ ॥ विदुरेणानुनीतोऽपि पुत्रमेवानुवर्त्तते। शकुनिर्बुद्धिपूर्वं हि कुन्तीपुत्रं समाह्वयत् ॥ ६ ॥ अनक्षज्ञं मताक्षः सन् क्षत्रवृत्ते स्थितं शुचिम्। ते तथा वञ्चयित्वा तु धर्मराजं युधिष्ठिरम् ॥ ७ ॥ न कस्याञ्चिदवस्थाया राज्यं दास्यन्ति वै स्वयम्। भवास्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन् वचः ॥ ८ ॥ मनांसि तस्य योधानां ध्रुवमावर्त्तयिष्यति। विदुरश्चापि तद्वाक्यं साधयिस्यति तावकम् ॥ ९ ॥ भीष्मद्रोणकृपादीना भेद सजनयिष्यति। अमात्येषु च भिन्नेषु योधेषु विमुखेषु च ॥ १० ॥ पुनरेकत्वकरणं तेषा कर्म भविष्यति। एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धय. ॥ ११ ॥ सेनाकर्म करिष्यन्ति द्रव्याणां चैव सञ्चयम्। भिद्यमानेषु च स्वेषु लम्बमाने तथा त्वयि ॥ १२ ॥ न तथा ते करिष्यन्ति सेनाकर्म न संशयः। एतत् प्रयोजनं चात्र प्राधान्येनोपलभ्यते ॥ १३ ॥ सङ्गत्या धृतराष्ट्रश्च कुर्य्या-

द्रूर्य्यं वचस्तव। स भवान् धर्मयुक्तश्च धर्मं तेषु समाचरन् ॥ १४ ॥ कृपालुषु परिक्लेशान् पाण्डवीयान् प्रकीर्त्तयन्। वृद्धेषु कुलधर्मञ्च ब्रुवन् पूर्वैरनुष्ठितम् ॥ १५ ॥ विभेतस्यति मनांस्येषामिति मे नात्र संशय.। न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित् ॥ १६ ॥ दूतकर्मणि युक्तश्च स्थविरस्य विशेषत.। स भवान् पुष्ययोगेन मुहूर्त्तेन जयेन च। कौरवेयान् प्रयात्वाशु कौन्तेयस्यार्थसिद्धये ॥ १७ ॥

वैशम्पायन उवाच। तथानुशिष्ट प्रययौ द्रुपदेन महात्मना। पुरोधा वृत्तसम्पन्नो नगरं नागसाह्वयम् ॥ १८ ॥ शिष्यै परवृतो विद्वान् नीतिशास्त्रार्थकोविद.। पाण्डवाना हितार्थाय कौरवान् प्रति जग्मिवान् ॥ १९ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि पुरोहितयाने
पञ्चमोऽध्याय ॥ ५ ॥

---

वैशम्पायन उवाच। पुरोहितं ते प्रस्थाप्य नगरं नागसाह्वयम्। दूतान् प्रस्थापयामासु पार्थिवेभ्यस्ततस्तत ॥ १ ॥ प्रस्थाप्य दूतानन्यत्र द्वारका पुरुषर्षभ। स्वयं जगाम कौरव्यः कुन्तीपुत्रो धनञ्जयः ॥ २ ॥ गते द्वारवतीं कृष्णे बलदेवे च माधवे। सह वृष्ण्यन्धकै सर्वैर्भोजैश्च शतशस्तदा ॥ ३ ॥ सर्वमागमयामास पाण्डवाना विचेष्टितम्। धृतराष्ट्रात्मजो राजा गूढै प्रणिहितैश्चरै ॥ ४ ॥ स श्रुत्वा माधवं यान्तं सदश्वैरनिलोपमै.। बलेन नातिमहता द्वारकामभ्ययात् पुरीम् ॥ ५ ॥ तमेव दिवसं चापि कौन्तेय पाण्डुनन्दन.। आनर्त्तनगरीं रम्यां जगामाशु धनञ्जयः ॥ ६ ॥ तौ यात्वा पुरुषव्याघ्रौ द्वारका कुरुनन्दनौ। सुप्तं ददृशतु कृष्णं शयानं चाभिजग्मतु ॥ ७ ॥ तत. शयाने गोविन्दे

प्रविवेश सुयोधनः । तच्छीर्षतश्च कृष्णस्य निषसाद वरासने ॥८॥ ततः किरीटी तस्यानु प्रविवेश महामनाः । पश्चार्द्धे च स कृष्णस्य प्रह्वोऽतिष्ठत् कृताञ्जलिः ॥ ९ ॥ प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनम् । स तयोः स्वागतं कृत्वा यथावत् प्रतिपूज्य तौ ॥१०॥ तदागमनजं हेतुं पप्रच्छ मधुसूदन. । ततो दुर्य्योधनः कृष्ण-मुवाच प्रहसन्निव ॥ ११ ॥ विग्रहेऽस्मिन् भवान् साह्यं मम दातु-मिहार्हति । समं हि भवतः सख्यं मयि चैवार्ज्जुनेऽपि च ॥ १२ ॥ तथा सम्बन्धकं तुल्यमस्माकं त्वयि माधव । अहं चाभिगतः पूर्व्वं त्वामद्य मधुसूदन ॥ १३ ॥ पूर्व्वं चाभिगतं सन्तो भजन्ते पूर्व्व-सारिणः । त्वञ्च श्रेष्ठतमो लोके सतामद्य जनार्द्दन । सततं सम्मतश्चैव सद्वृत्तमनुपालय ॥ १४ ॥

कृष्ण उवाच । भवानभिगत' पूर्व्वमत्र मे नास्ति संशय' । दृष्टस्तु प्रथमं राजन् मया पार्थो धनञ्जय ॥ १५ ॥ तव पूर्व्वाभि-गमनात् पूर्व्वं चाप्यस्य दर्शनात् । साहाय्यमुभयोरेव करिष्यामि सुयोधन ॥ १६ ॥ प्रवारणन्तु बालानां पूर्व्वं कार्य्यमिति श्रुति । तस्मात् प्रवारणा पूर्व्वमर्हः पार्थो धनञ्जयः ॥ १७ ॥ मत्संहनन-तुल्याना गोपानामर्बुदं महत् । नारायणा इति ख्याताः सर्व्वे संग्रामयोधिनः ॥ १८ ॥ ते वा युधि दुराधर्षा भवन्त्वेकस्य सैनिकाः । अयुध्यमानः संग्रामे न्यस्तशस्त्रोऽहमेकतः ॥ १९ ॥ आभ्यामन्यतरं पार्थ यत्ते हृद्यतरं मतम् । तद्वृणीतां भवानग्रे प्रवार्य्यस्त्वं हि धर्म्मतः ॥ २० ॥

वैशम्पायन उवाच । एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनञ्जय । अयुध्यमानं संग्रामे वरयामास केशवम् ॥ २१ ॥ नारायणममित्रघ्नं कामाज्जातमजं नृषु । सर्व्वक्षत्रस्य पुरतो देवदानवयोरपि ॥ २२ ॥ दुर्य्योधनस्तु तत् सैन्यं सर्व्वमावरयत्तदा । सहस्राणां सहस्रन्तु योधानां प्राप्य भारत ॥ २३ ॥ कृष्णं चापहृतं ज्ञात्वा

सम्प्राप परमां मुदम्। दुर्य्योधनस्तु तत् सैन्यं सर्वमाहृत्य पार्थिवः
॥ २४ ॥ ततोऽभ्ययाद्भीमबलो रौहिणेयं महाबलम्। सर्वं चाग-
मने हेतुं स तस्मै संन्यवेदयत्। प्रत्युवाच ततः शौरिर्धार्त्तराष्ट्र-
मिदं वचः ॥ २५ ॥

बलदेव उवाच। विदितं ते नरव्याघ्र सर्वं भवितुमर्हति।
यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा ॥ २६ ॥ निगृह्योक्तो
हृषीकेशस्त्वदर्थं कुरुनन्दन। मया सम्बन्धकं तुल्यमिति राजन्
पुनः पुनः ॥ २७ ॥ न च तद्वाक्यमुक्तं वै केशवः प्रत्यपद्यत। न
चाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् ॥ २८ ॥ नाहं सहायः
पार्थस्य नापि दुर्य्योधनस्य वै। इति मे निश्चिता बुद्धिर्वासुदेव-
मवेक्ष्य ह ॥ २९ ॥ जातोऽसि भारते वंशे सर्वपार्थिवपूजिते।
गच्छ युध्यस्व धर्मेण क्षात्रेण भरतर्षभ ॥ ३० ॥

वैशम्पायन उवाच। इत्येवमुक्तस्तु तदा परिष्वज्य हला-
युधम्। कृष्णं चापहृतं ज्ञात्वा जितं मेने धनञ्जयम् ॥ ३१ ॥
सोऽभ्ययात् कृतवर्माणं धृतराष्ट्रसुतो नृपः। कृतवर्मा ददौ तस्य
सेनामक्षौहिणीं तदा ॥ ३२ ॥ स तेन सर्वसैन्येन भीमेन कुरु-
नन्दनः। वृतः परिययौ हृष्टः सुहृदः सम्प्रहर्षयन् ॥ ३३ ॥ ततः
पीताम्बरधरो जगत्स्रष्टा जनार्द्दनः। गते दुर्य्योधने कृष्णः किरी-
टिनमथाब्रवीत्। अयुध्यमानः कां बुद्धिमास्थायाहं वृतस्त्वया ॥३४॥

अर्जुन उवाच। भवान् समर्थस्तान् सर्वान्निहन्तुं नात्र संशयः।
निहन्तुमहमप्येकः समर्थः पुरुषर्षभ ॥ ३५ ॥ भवांस्तु कीर्त्ति-
माल्लोके तद्यशस्त्वां गमिष्यति। यशसा चाहमप्यर्थी तस्मादसि
मया वृतः ॥ ३६ ॥ सारथ्यन्तु त्वया कार्य्यमिति मे मानसं सदा।
चिररात्रेप्सितं कामं तद्भवान् कर्त्तुमर्हति ॥ ३७ ॥

वासुदेव उवाच। उपपन्नमिदं पार्थ यत् स्पर्द्धसि मया सह।
सारथ्य ते करिष्यामि कामः सम्पद्यतां तव ॥ ३८ ॥

